so also भावाभास is seen when भाव ( emotion ) is improperly narrated i.e. when those are onesided ; comp—

"हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु
गौणेष्वपि च पदार्थेषु तमाभासं विजानते" ।

Kanthabbharana V. 20

(b) Bhoja, Viswanatha, Vidyanatha and some others describe animal—sentiments as रसाभास ; Vidyadhara refutes this view. Mammata also perhaps supports this when he gives "ग्रीवाभङ्गाभिरामम्" as an example of terrific रस ।

Also note that—

(2) भावशान्ति is cessation of an emotion ; and भावोदय is rise of an emotion ; Jagannath thinks that cessation must be along with rise of another emotion ( भाव ) ।

(3) भावसन्धि, भावशबलता—when two opposite emotions ( भाव ) striving to get the upper hand, are depicted as relished at the same time and at the same place, then we have भावसन्धि or mixture of emotions,

When several emotions, each later one overcoming the previous one, are stated as relished not simultaneously but in times then we have भावशबलता ( variegation of emotions ) ; in भावशबलता some take each later भाव as पूर्वपूर्वोपमर्दि (i. e, overcoming the previous ones). Jagannath Pandit does not think so.

(4) रस (sentiment of शृङ्गार or amour of the type of सम्भोग as

opposed to वियोग ) is enumerated in the sloka "शून्यं वासगृहं विलोक्य"। [ N. B.—"परिचुम्ब्य स्थिताबाला ततः अस्याः गण्डस्थलीम् जातपुलकामालोक्य" इत्यनेन प्रकारेण "स्थिता"-दि पदाध्याहारेण अत्र समानकर्तृकता-निर्वाहः स्यात् ]।

(5) And again भाव or inspiration of devotional love (भगवद्विषयी रतिभावः) with regard to Srikishna is enumerated in the sloka "यस्य शल्कसीम्नि जलधिः अलीयत" (describing deeds of ten Avataras of Sri Vishnu ) by the great Raghavananda the maker of Sandhi ( peace ) and "vigraha" ( war ).

The ten Avataras are—मत्स्य, कूर्म, वराह, नृसिंह, वामन, परशुराम, बलराम, श्रीरामचन्द्र, बुद्ध and कल्कि in order.

(6) Lastly रसाभास ( apparent sentiment of सम्भोगशृङ्गार is depicted in the sloka "मधु द्विरेफः" etc. it is said as रसाभाव for the शृङ्गार is with respect to lower animals ( तिर्यग्प्राणि ) ]।

**दोषाः पुनः काव्ये किं स्वरूपा इत्युच्यन्ते—**

**दोषास्तस्यापकर्षकाः।**

**श्रुतिदुष्ट-अपुष्टार्थत्वादयः काणत्व-खञ्जत्वादय इव, शब्दार्थ-द्वारेण देहद्वारेण इव, व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय वत्, साक्षात् काव्यस्यात्मभूतं रसम् अपकर्षन्तः, काव्यस्य अपकर्षका दोषा इत्युच्यन्ते। एषां विशेषोदाहरणानि ( अत्र सप्तमाध्याये ) वक्ष्यामः।**

What are the characteristics of faults or defects ( दोष ) in a kavya ; on this our author says "defects in a kavya

are those that detract or mar the रस in the Kavya". Thus श्रुतिदुष्ट, अपुष्टार्थ etc, are defects in शब्द or words and in अर्थ or meanings, and these like blindness or lameness in limbs detract the main sentiment or structure ; these defects come out through शब्द and अर्थ, as limbdefects are seen through blindness and lameness ; and concomitant sentiment (व्यभिचारिभाव) expressed directly by words detract the enjoyable sentiment in a kavya as ignorance directly expressed detract the glory of the soul in the body ; and thus these marring the main आत्मभूत रस or soul are said to be defects in a kavya (काव्यस्य अपकर्षकाः)। Particular instances of these are to be given in the seventh chapter ahead : (also cf. गुणानां शब्दार्थोत्कर्षद्वारा यथा रसोत्कर्षकत्वं तथा गुणपरिच्छेदे दर्शयिष्यन्ते" ; hence गुण will be described later on in ch. viii ) :—

गुणाः किंस्वरूपा इत्युच्यन्ते—

उत्कर्षहेतवः प्रोक्ता गुणालङ्कार-रीतयः ॥३॥

गुणाः शौर्य्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयः अवयवसंस्थानविशेषवत्, देहद्वारेण इव शब्दार्थद्वारेण तस्य काव्यस्य आत्मभूतं रसम् उत्कर्षयन्तः काव्यस्य उत्कर्षकाः इत्युच्यन्ते। इह (नवीनालङ्कारिकमते) यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोः उपचर्य्यते। अतश्च—"गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षकाः" इत्युक्तं भवति,—इति प्रागेवोक्तम्। एषामपि विशेषोदाहरणानि (अत्र अष्टमाध्याये) वक्ष्यामः॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधार-ध्वनिप्रस्थापनपरमाचार्य-कविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्ग — सान्धिविग्रहिक- महापात्र श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमः परिच्छेदः ।

And गुण or internal qualities are being enumerated or defined here—गुण ( internal quality ), अलङ्कार (figures of speech ), रीति ( style ) are those that contribute to the excellence of रस the soul a kavya ; Qualities (गुण) of a kavya are like courage etc in a person, Alamkaras are like bangles or ear-drops used in the decoration of a person ; styles are like development of particular limbs ; as these गुण through शब्द and अर्थ develop the रस and hence increases excellence in a kavya, so these are said to be गुण like courage of our souls etc. Acc. to modern rhetoricians though गुण are qualities or properties of रस in a काव्य, still the word गुण in such cases are used or attributed ( by transference of meaning or उपचार ) to words (शब्द) or to meaning (अर्थ ) that go to express some गुण ; गुण are the properties of Rasa (रस) । hence the saying "गुणाभिव्यञ्जकाः शब्दाः रसस्योत्कर्षकाः" is significant ; and we have already said this before. And instances of शब्द and अर्थ expressing गुण (e. g. माधुर्य्य, ओजस् and प्रसाद ) will be given or enumerated ahead in chapter eight (cp "यथा अङ्गित्वमाप्तस्य आत्मनः उत्कर्षहेतुत्वात् शौर्यादयः गुणशब्दवाच्याः, तथा काव्ये अङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषा माधुर्य्यादयः अपि" ) ।

[ Remark—(1) Also Note—To create such रसात्मक काव्य natural genius (प्रतिभा or शक्ति or नवनवोन्मेषशालिनी प्रज्ञा ) is the main cause of production ; though व्युत्पत्ति and अभ्यास are also necessary for the purpose ; thus काव्यादर्श says "नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम् । अमन्दाभियोगोऽस्याः कारणं काव्यसम्पदः" ;

Mamnata in his काव्यप्रकाश also writes—

"शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥"

and the tika there also has—दण्डचक्रादिन्यायेन परस्परसापेक्षाणामन्वयः कारणम्" ।

And the salutary effect of such रसात्मककाव्य ( holding some high ideal of चतुर्वर्गप्राप्ति ) is as Mammata says—"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये, सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥"—i.e. a kavya conduces to यशस्, अर्थ, knowledge of decorum and etiquette ; it dispels evils and immediately confers highest delight and advices like a loving wife.

(2) Also note-gunas are the properties of Rasa ; as bravery etc reside in soul, so माधुर्य and other गुण reside in रस (sentiment) which is the soul of काव्य । since properties cannot be identified with substances in which they reside so गुण cannot be comprised under ध्वनि or गुणिन् । Nor can ध्वनि be included under अलङ्कार ; for श्लेषालङ्कार has no ध्वनि or inner sense or suggested sense. And ध्वनि is with regard to काव्य, रस, अलङ्कार etc. So along with रसात्मककाव्य come the cosideration of दोष, गुण, रीति etc that have bearing on Rasa.]

# द्वितीयः परिच्छेदः

N. B.—Having thus defined kavya our author will now in chap. II here defines वाक्य (sentences) that go to contribute or comprise a kavya ; so he says (सङ्गतिहेतोः वाक्यं निरूपयति)—

वाक्यस्वरूपमाह—

**वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः ॥**

A वाक्य or sentence is comprised by a number of words combined together being interelated in meaning and having affinity (योग्यतायुक्त), and without each of which the idea is not complete (आकाङ्क्षायुक्त) and which are found together then and there without any break of time (आसत्तियुक्त) ।

Our author hence now explains the words योग्यता, आकाङ्क्षा and आसत्ति ( as used in his def. of वाक्य ) in order—

**योग्यता पदार्थानां परस्परसम्बन्धे वाधाभावः (=परस्पर-सम्बन्ध-सद्भावः इत्यर्थः। अतः वाक्यपदीये उक्तम् "सति प्रत्यय-हेतुत्वे, सम्बन्ध उपपद्यते")। पदोच्चयस्य एतदभावेपि, वाक्यत्वे "वह्निना सिञ्चति" इत्याद्यपि वाक्यं स्यात्।**

मित—। तात्पर्य्यविषयीभूत परस्परसम्बन्धे सति शब्दार्थानां तत्सद्भावे योग्यता।

योग्यता is fitness of relation of words as due to interrelation of meaning between them ; and this interrelation may not exist in all conglomeration of words ; thus this

does not lie in sentences like "वह्निना सिञ्चति"। ( अत्र निरुक्त-योग्यताविरहः स्पष्टः। वह्निनासिञ्चनमसम्भवम् )।

आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः। स च श्रोतुर्जिज्ञासा-रूपः। निराकाङ्क्षस्य वाक्यत्वे "गौरश्वः पुरुषो हस्ती" इत्यादी-नामपि वाक्यत्वं स्यात्।

आकाङ्क्षा is anxiety to finish an idea i.e, non-end of one complete thought or non-cessation of a complete idea ; this is due to question or desire to know further, by the hearer ( श्रोता ) ; if unconnected unrelated (आकाङ्क्षाहीन) words form a sentence, then गौः अश्वः पुरुषः etc will constitute a sentence.

आसत्तिर्बुद्ध्यविच्छेदः। बुद्धिविच्छेदेपि वाक्यत्वे इदानी-मुच्चारितस्य देवदत्तस्य शब्दस्य ( पदस्य ) दिनान्तरोच्चारितेन 'गच्छति' इति पदेन सङ्गतिः स्यात्। अत्र अकाङ्क्षायोग्यतयोः आत्मार्थधर्मत्वेपि पदोच्चयधर्मत्वमुपचारात्।

आसत्ति or close proximity is non-break non-interval of wit or idea ; if a sentence is complete by a long break of wit or idea then the word देवदत्त uttered now will go to complete a sentence with the word गच्छति uttered in another day. If it be argued that in such case there is no पदोच्चय here at a stretch at a time, so no sentence too, and the inclusion of the word आसत्ति is not essential in the definition of वाक्य, then to safeguard his position the author says in the above

strain ; and stresses that there will be no sentence without आसत्ति of the context ( "प्रकृतोपयोगिपदार्थोपस्थित्या आसत्तिः" )। Now he shows that योग्यता and आकाङ्क्षा which are tendencies of or attributes of the internal mind ( आत्मवृत्ति or आत्मधर्म ), are also attributes of पदोच्चय due to transference of epithet ( उपचार )। "अत्र आकाङ्क्षादिः आत्मधर्मत्वे पि पदोच्चयधर्मत्वमुपचारात्" [N. B.—उपचार is लक्षणा or secondary or transferred meaning].

**वाक्योच्चयो महावाक्यम् ॥ योग्यताकाङ्क्षासत्तियुक्त इत्येव ॥ इत्थं वाक्यं द्विधामतम् ॥ १ ॥ 'इत्थम्' (अनेन प्रकारेण) वाक्यत्व-महावाक्यत्वेन ( वाक्यं द्विधा मतम् )।**

महावाक्य is again a continuation ( conglomeration ) of several वाक्य or sentences having योग्यता, आकाङ्क्षा, and आसत्ति। Thus वाक्य is known to be of two varieties, viz ordinary वाक्य and महावाक्य or वाक्यसमष्टिः एकता।

**उक्तञ्च—**

**"स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्या जायते" ॥ इति।**

**तत्र वाक्यं यथा "शून्यंवासगृहम्" इत्यादि। महावाक्यं 'यथा' रामायण महाभारत रघुवंशादि।**

And it is elsewhere said by older professors that due again to interrelation of ideas ( स्वार्थबोधे अङ्गाङ्गित्वव्यपेक्षया ) as relation of body and limbs, several वाक्य by union go to make one वाक्य to complete some sense ( स्वार्थबोधे समाप्तानां संहत्या एकवाक्यत्वं जायते )।

"'शून्य' वासगृहम्" etc are instances of वाक्य; and रामायण' महाभारत, रघुवंश are instances of महावाक्य (for these are formed of many related वाक्य) । Now our author will define पद that form वाक्य and so he says—

पदोच्चयो वाक्यमित्युक्तम्, तत्र किं पदलक्षणमित्यत आह-

वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः । यथा-घटः ।

It is said that वाक्य is a conglomeration or construction of several words ( पद ), now the question arises what is the definition ( लक्षण ) of a पद । So our author says that a पद is combination of letters ( वर्ण ) fit to be applied (प्रयोगार्ह) unrelated ( अनन्वित ) with each other, and giving one idea only ( एकार्थबोधक ) । For example घटः is a पद ।

'प्रयोगार्ह' इति प्रातिपदिकस्य व्यवच्छेदः । 'अनन्वित' इति वाक्यमहावाक्ययोः ( व्यवच्छेदः ) । 'एक' इति साकाङ्क्षानेकपदवाक्यानाम् ( व्यवच्छेदः ) । 'अर्थबोधकाः' इति 'कचटतप' इत्यादीनाम् ( व्यवच्छेदः ) । 'वर्णाः' इति बहुवचनम् अविवक्षितम् ।

We say "प्रयोगार्ह वर्ण" in the definition of पद to differentiate it from प्रातिपदिक ( प्रातिपदिकव्यवच्छेद ) । प्रातिपदिक is a significant crude form of a word i. e. word without विभक्ति and so unfit for प्रयोग or use; (Panini defines प्रातिपदिक as "अर्थवत् अधातुरप्रत्ययः प्रातिपदिकम्" ) । By अनन्वित in the definition, पद is differentiated from वाक्य and महावाक्य । By एक. in the

def. पद is differentiated from वाक्य which is a conglomeration of many related पद। By अर्थबोधक, पद is differentiated from letters like क, च, ट त प etc which has apparently no meaning.

बहुवचन (plural) in वर्णाः here is not essential—it is अविवक्षित।

मित—पदलक्षणे "प्रयोगार्ह" इति उक्त्वा "पदं" प्रातिपदिकात् विभिन्नं इति ज्ञापयति। अत आह—"प्रयोगार्ह" इत्यनेन "प्रातिपदिकस्य व्यवच्छेदः" पदात्प्रातिपदिकस्य भिन्नत्वं प्रदर्शितं इत्यर्थः। "अनन्वित" इति "वाक्यमहावाक्ययोः व्यवच्छेदः"। एवमन्यत्रापि बोध्यम्॥ लक्षणे 'वर्णाः' इति बहुवचनम् अविवक्षितम् भवति। "वर्णः" इत्यपि लक्षणे साधकः स्यात्। अकारस्य एकवर्णस्यापि प्रयोगार्हत्वे अर्थबोधकत्वादिसद्भावात्॥

वर्णोत्पत्तिरेवम् स्यात्—"चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितं मूलाधारस्थितमनलं चालयति, तदनलः तत्रस्थं वायुं चालयति, तच्चालितेन वायुना तत्रैव सूक्ष्मरूपेण उत्पादितः शब्दः "परा सूक्ष्मा वाग्" इति अभिधीयते। ततो नाभिदेशपर्यन्तचलितेन तेन तद्देशसंयोगात् उत्पादितः शब्दः "पश्यन्ती"ति व्यवह्रियते। ततः तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दः "मध्यमा" इत्युच्यते। ततो मुखदेशमाक्रमता तेन कण्ठदेशमासाद्य मूर्धानमाहत्य तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादिकेषु अष्टसु स्थानेषु स्वाभिघातेनोत्पादितः वैखरी इति कथ्यते"॥

उक्तञ्च—"वैखरी शब्दनिष्पत्ति मध्यमा श्रुतिगोचरा। द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी"।

Now the author says of पदप्रतिपाद्य अर्थ—

**अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधामतः।**

मित—। पदप्रतिपाद्यः अर्थः त्रिधाविभज्यते॥ Thus again अर्थ from a

पद is of 3 varieties e.g (i) वाच्य or directly expressive अर्थ (ii) लक्ष्य having some secondary or transferred sense and (iii) व्यङ्ग्य having some suggestive or implied sense.

N. B.—As परावाक् is eternal owing to eternity of creation, so relation of वाक् (शब्द) with its अर्थ or meaning is also said by many as eternal, cp "अनादिकालप्रवृत्तः शब्दार्थयोः सम्बन्धः"। and "सूक्ष्मा वाक् अनपायिनी" etc.

And this अर्थ is again expressed in three ways as will be said below—

एषां ( स्वरूपं ) लक्षणमाह—

वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः॥

'ताः'—अभिधाद्याः।

मित—। पदप्रतिपाद्यः 'वाच्यार्थः अभिधयाशक्त्या' साक्षात्सङ्केतितशक्त्या 'बोध्यः' बोधविषयोभवति। 'लक्ष्यः' लक्ष्यार्थः लक्षणयाशक्त्या बोधविषयो भवति। एवं व्यञ्जनयाशक्त्या व्यङ्ग्यार्थो बोधविषयो जायते। एवं शब्दस्य त्रिप्रकाराशक्तिः यथा (i) अभिधा वा साक्षात्सङ्केतिता, (ii) लक्ष्या मुख्यार्थबाधे तद्योगे च लक्षणाशक्ति, (iii) व्यङ्ग्या गम्या, ध्वन्यात्मिकया परिणतबुद्धिमात्रविषया गम्या।

पदप्रतिपाद्य अर्थ is said वाच्य when it is directly known from the well-known वाच्यशक्ति or अभिधाशक्ति or direct meaning of words, meanings given to it by usage or connection; अर्थ is said लक्ष्य when the direct meaning cannot be applied and is barred but rather a secondary meaning is applied with refeience to the context—this is due to लक्षणाशक्ति or trans-

ference or secondary meaning which arises due to मुख्यार्थबाध but तद्योगात् or due to प्रयोजन ; अर्थ is again said व्यङ्ग्य when an implied meaning or ध्वनि (suggestion or signification) is taken instead of the direct meaning of a word, and direct sense gives rise to another sense comprehendedby geniuses, this is known as व्यञ्जनाशक्ति due to maturity of intellect; (most rhetoricians with our author do not accept तात्पर्य्यार्थ as separate from व्याङ्ग्यार्थ, thus विद्यानाथ says "तात्पर्य्यार्थोऽपि व्यङ्ग्यार्थ एव")।

Thus we say words have three शक्ति—eg, अभिधा, लक्षणा and व्यञ्जना। So words are either वाचक लक्षक or व्यञ्जक ; and the अर्थ correspondingly are वाच्य, लक्ष्य and व्यङ्ग्य। Thus in his "Tarala" Mallinatha also says "यः सङ्केतितमर्थं साक्षाद्ब्रूते स वाचकः शब्दः"। "आरोपितार्थद्योतनात् लक्षकः"। "व्यञ्जनात् व्यञ्जकः"।

**तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा ॥** उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'गामानय' इत्युक्ते, तं गवानयनप्रवृत्तं उपलभ्य बालः अस्य वाक्यस्य "सास्नादिमत् पिण्डानयनमर्थः' इति प्रथमं प्रतिपद्यते। अनन्तरं च "गांवधान, अश्वमानय' इत्यादौ आवापोद्वापाभ्यां गोशब्दस्य 'सास्नादिमानर्थः' आनयनपदस्य च 'आहरणमर्थः' इति सङ्केतमवधारयति। क्वचिच्च प्रसिद्धार्थपद-समभिव्याहारात्। यथा—'इह प्रभिन्नकमलोदरे मधूनिमधुकरः पिवति' इत्यत्र। क्वचिदाप्तोपदेशात्। यथा, "अयमश्वशब्द वाच्यः" इत्यत्र। तं च सङ्केतितमर्थम् बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधानाम।

नित— । पूर्वंनिर्वीक्तं यत् साक्षात्सङ्केतितोर्थः एव वाच्यार्थः । स च शब्दस्य अभिधाशक्तिवशात् । ततः या शक्तिः साक्षात्सङ्केतितमर्थं बोधयति सा हि अभिधा नाम शक्तिः । तत्र 'प्रसिद्धार्थपदसमभिव्याहारात्' साहचर्य्यात्, 'आप्तोपदेशाच्च भवति' ॥ आवापः =अन्वयः ; तत्सत्त्वे तत्सत्ता इत्यर्थः ; उद्वाप : =व्यतिरेकः ; तदसत्त्वे तदसत्ता इति । यथा, 'गां बधान' इत्यत्र गोपदसत्त्वे 'सास्नादिमत् पदार्थबोधः' [ 'सास्ना' इति गलकम्बलः ] । 'आनय' पदव्यतिरेकेण आहरणपदार्थबोधाभावः । 'अश्वमानय' इत्यत्र गोपदव्यतिरेकेण सास्नादिमत्पदार्थबोधाभावः । आनयपदसत्त्वे आहरणपदार्थबोधः—इत्येवंरूपौ 'अन्वयव्यतिरेकौ' नाम "आवापोद्वापौ" । उभयमपि एकार्थबोधकम् इति प्रथमपरिच्छेदेपि द्रष्टव्यम् ।

Of the three शक्ति or power or force of words, the first अभिधाशक्ति, is that which signifies the directly implied meaning of words ( साक्षात् सङ्केतितस्य अर्थस्य बोधनम् ) । Thus when a very old man ( उत्तमवृद्ध ) addresses a tolerably aged one as 'गामानय' then seeing the second one engaged in brnging a cow or गो, the young understands this गो as directly signifying an object having सास्ना or गलकम्बल, लाङ्गूल tail etc. And then from the sentence "गांबधान, अश्वमानय" the young one knows by positive instance ( अन्वय or आवाप ) and negative instance (व्यतिरेक or उद्वाप) that the word गो means or denotes a creature having सास्ना, लाङ्गूल, ककुद, खुर etc, and आनय means bringing ( आहरणम् ) ; These are सङ्केतित अर्थ of these two words ; sometimes this conception comes through knowledge of a wellknown word used in connection with another ( प्रसिद्धार्थसाहचर्य्य ) ; as in "मधूनि मधुकरः पिबति" । Some-

times this conception comes through testimony or instructions of the old ( आप्तोपदेशात्, ), as in "अयमश्वशब्दवाच्यः"। Also compare—"शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च"। Thus also we say that अभिधाशक्ति is that which denotes the meaning directly signified by a word and not at all screened by anything else ( शब्दान्तरानन्तरिता )।

सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ ४ ॥

जातिर्गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधानहेतुः सिद्धो ( *i. e.* नित्यः ) वस्तुधर्मः। शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यः व्यावर्त्तयन्ति। द्रव्यशब्दाः एकव्यक्ति-वाचिनो हरिहरडित्थडवित्थादयः। क्रियाः साध्यरूपा वस्तुधर्मा पाकादयः। एषु हि अधिश्रयणावश्रयणान्तादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते। न व्यक्तौ। आनन्त्यव्यभिचारदोषापातात्।

The next question is where is this सङ्केत is to be placed ? The नैयायिक apply it to व्यक्ति ( a concrete object ) but then only one object will be signified by a class name ( cp "यस्यां गोव्यक्तौ सङ्केतः तदतिरिक्तायाः गोशब्देन भानासम्भवात्" )। But the आलङ्कारिक and वैयाकरण are against this view, so our author says "सङ्केतो गृह्यते जातौ...न व्यक्तौ"। It is rather more appropriately placed on उपाधि or properties of व्यक्ति। Hence the author by way of modification here, after जातौ says "गुणद्रव्यक्रियासु च सङ्केतः गृह्यते"। Thus also भर्त्तृहरि in his वाक्यपदीय says, "गोत्वाभिसम्बन्धात् गौः"।

Now the author explains जाति, गुण द्रव्य and क्रिया in order here—By जाति we mean गोत्व etc, the common feature existing in all गोपिण्ड, and गुण is the eternal qualities of a वस्तु which characterises it and differentiates it from others ( विशेषाधानहेतु ), and गुण in seen with reference to द्रव्य only ( cp "जन्मना जायते जातिः" and "गुणःद्रव्यमात्राश्रयवर्त्तते, तत एव च द्रव्यान्निवर्त्तते, स्वजातीयेषु तथा भिन्नजातीयेषु द्रव्येषु अपि दृश्यते। एतेन जातेर्गुणत्वं वारितम्" । Bhashya and Kaiyata also say that गुण always seen in व्यक्ति is also seen in जाति, for व्यक्ति go to constitute जाति ; ( vide under the panini rule "षोतो गुणवचनात्" ) ; Thus whiteness ( शुक्ल etc ) seen in some गो or cow differentiates it from another black cow falling within the same class of cow ( and this whiteness is seen in other class of horses, does etc ) ; and द्रव्य signifies one individual (एकव्यक्ति) as हरि, हर, हरिहर, डित्थ and डवित्थ etc.

[N. B.—डित्थ = wooden elephant ; डवित्थ = wooden anetelope]

By क्रिया we mean results seen in वस्तु ( objects ), as the effects of पाक् ( cp "क्रिया च भावना उत्पादयितुः व्यापाररूपा, साध्यत्वेन i.e, जन्यस्वभावेन अभिधीयमाना" ) due to the efforts of the doer ; Thus by पाक is meant all the works in order beginning with अधिश्रयण i.e, placing an object on oven and ending in अवश्रयण i.e, taking it off from the oven. In all these four cases सङ्केत is taken on the उपाधि or properties of व्यक्ति and not on व्यक्ति only ; for in that case the special fault will

arise that this सङ्केत will not go to all countless individuals ( आनन्त्यव्यभिचारदोषापातात् i.e, अनन्तानां गोव्यक्तीनां युगपत् उपस्थानासम्भवात्, अनन्तव्यक्तिषु लक्षणस्य अगमनात् व्यक्तौ सङ्केतग्रहः सदोषः स्यात् इत्यर्थः। सङ्केतग्रहकाले अदृष्टव्यक्तौ अपि बोध्यस्य कार्य्यस्य सत्त्वात् व्यक्तिसङ्केतग्रहणरूपकारणस्य सिद्धत्वात् अपि व्यभिचारः स्यात् )॥

मितभाषिणी—[ उपरि षाङ्गलव्याख्या च द्रष्टव्या )।

Now our author will define लक्षणा—

अथ लक्षणा—

मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।
रूढ़ेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥५॥

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थे असम्भवन् यया शब्दशक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च "गङ्गायां घोषः" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृते असम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति, सा शब्दस्य अर्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्वत्र हेतुः रूढिः प्रसिद्धिरित्यर्थः। उत्तरत्र "गङ्गातटे घोषः" इति प्रतिपादनालभ्यस्य ( वाक्यलभ्यस्य ) शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनं हेतुं विनापि यस्य कस्यचित्सम्बन्धिनो लक्षणे अतिप्रसङ्गः स्यात्, इत्युक्तम् "रूढ़ेः प्रयोजनाद्वा" इति।

When the directly signified meaning मुख्यार्थ of a word cannot be applied or is barred in a particular case, and another meaning is attributed thereon, in connection with

the मुख्यार्थ due to रूढ़ि or प्रसिद्धि (i.e, well known application, or कोशपरम्परादि प्रसिद्धि ), or out of some प्रयोजन necessity or purpose, to get some inner significant meaning on hand, then we have लक्षणाशक्ति ( or secondary meaning coming in connection with the direct meaning ; मुख्यार्थसम्बन्धात् लक्षणा ; मुख्यार्थस्य अनुपपत्तेः च लक्षणा स्यात्" ) ।

Thus in the sentence "कलिङ्गः साहसिकः" the word कलिङ्ग cannot be applied in its original or direct meaning of the country of Orissa ; but it means कलिङ्गसम्बन्धी पुरुष, by force of शब्दशक्ति । Similarly in "गङ्गायां घोषः", the घोषः ( आभीरपल्ली ) cannot be on जलमय Ganga--the मुख्यार्थ is here barred, then owing to the relation of nearness or सामीप्य, Ganga refers to गङ्गातट, this secondary power of words which is not its natural meaning and which is neither given to it by god is called the लक्षणाशक्ति ( secondary or transferred meaning of words ). In the first case कलिङ्ग by रूढ़ि i,e, प्रसिद्धि or well-known connective meaning means कलिङ्गवासी पुरुष, and in the second case Ganga means गङ्गातट to denote शीतल पावनत्व of ganga ; and this secondary meaning of गङ्गातट for ganga is due to meet some special necessity प्रयोजन । Otherwise लक्षणा may go to any and every सम्बन्ध (relation) । Hence it is said "रूढ़ेः प्रयोजनाद्वा" in the above sloka of def. of लक्षणा ।

N. B,—Words are either वाचक ( expressive ) लक्षक ( having some appl ication ) or व्यञ्जक ( suggestive ) ; A वाचक

is one which expresses a meaning directly, the meaning given to it by convention. Thus Mallinatha says "यः सङ्केतितमर्थं साक्षात् ब्रूते स वाचकः शब्दः"। And we have seen सङ्केत should not be placed on व्यक्ति but on उपाधि ( properties of व्यक्ति) rather। The अर्थ corresponding to वाचक is वाच्य, to लक्षक is लक्ष्य and to व्यञ्जक is व्यङ्ग्य। तात्पर्य्यार्थ is included in व्यङ्ग्यार्थ, or suggestive sense ; thus as said before Vidyanatha says "तात्पर्य्यार्थोऽपि व्यङ्ग्यार्थ एव"। When there is impossibility of मुख्यार्थ and a secondary meaning connected with मुख्यार्थ is intended then we get लक्ष्यार्थ। The essentials of लक्षणा are thus (i) मुख्यार्थबाध (ii) then we get तद्योग् then (iii) रूढ़ि or प्रयोजन। Thus in 'गङ्गायां घोषः, primary sense of गङ्गाप्रवाह is inapplicable, for there can be no घोष or आभीरपल्ली on ganges water. There is then मुख्यार्थबाध, गङ्गा then means गङ्गातट by मुख्यार्थयोग by सामीप्य सम्बन्ध, and is resorted to convey some necessity or प्रयोजन or purpose i.e, to convey शीतत्व पावनत्व etc of गङ्गा। Hence here all the requisites of लक्षणा are fulfilled.

व्यञ्जनाशक्ति or वृत्ति is the power by which senses expressed, or attributed ( वाच्य वा लक्ष्य ) give rise to another sense comprehended by appreciating geniuses ( see ante and intro. also ).

मितभाषिणी = सुगमा।

केचित्तु 'कर्मणिकुशलः' इति रूढौ उदाहरन्ति। तेषामयमभि-प्रायः—कुशान् लाति इति व्युत्पत्तिलभ्यः कुशग्राहिरूपोमुख्योर्थः

प्रकृते असम्भवन् विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपम् अर्थं बोधयति। तदन्ये न मन्यन्ते। कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्य एव मुख्यार्थत्वात्। अन्यद्धि शब्दानां व्युत्पत्तिलभ्यम् अन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात्। "गमेडोः" (उणादि सूत्र २।६८) इति गमधातोः डो-प्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकाले अप्रयोगात्।

Some cite the instance "कर्मणि कुशलः" as an example of लक्षणा due to रूढ़ि or प्रसिद्धि। Their motive or explanation here is this—the direct meaning (मुख्यार्थ) of the word कुशल is by derivation as कुशान्लाति one who gathers kusha; but this meaning of कुशल being impossible or inapplicable in the case of "कर्मणि कुशलः", it hints at or refers to the meaning दक्ष or expert or "adept" due to साधर्म्यसम्बन्ध (both implying विवेचकत्व or the like); but others do not think it as sound; they hold that though by derivation कुशल means "one who gathers or collects kushas" still its मुख्यार्थ is दक्ष or adept or expert. The derivative meaning of a word is one, but different in many cases is the connotation (प्रवृत्ति निमित्त) of the same word, and hence sometimes derivative meaning sometimes connotative meaning is taken (by usage etc) as the मुख्यार्थ of a word. If the derivative meaning is invariably or al then in "गौः

शेते" ( the cow lies down ) we are to take recourse to or apply लक्षणा, for the word "गो" derived as गम्+डो ( unadi affix ) mean one that goes on, so during शयन or lying down the word cannot be rightly applied unless we resort to लक्षणा। (cp "लब्धात्मिका सती रूढ़िर्भवेत् योगापहारिणी" i.e, sometimes रूढ़ि supesedes यौगिक meaning ).

N. B,—Thus we get लक्षणा due to रूढ़ि or प्रसिद्धि, or due to प्रयोजन ॥ The author now further gives special instances (varieties) of लक्षणा—लक्षणायाः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह—

तद् भेदानाह—

मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥६॥

( Construe here as—"मुख्यार्थस्य, वाक्यार्थे अन्वयसिद्धये" अन्वयबोधाय 'इतराक्षेपः' अन्यस्य सम्बन्धिनः प्रत्यायनम् यया वृत्त्या स्यात्, आत्मनः मुख्यार्थस्य अपि उपादानात् प्रत्यायनात् बोधादित्यर्थः, मुख्यार्थविषयिणी प्रतीतिरुपादानम् तद्धेतुः या लक्षणा सा उपादानलक्षणा इति भावः। तथा चोक्तम्—"अभिधेयाविनाभूतप्रतीतिर्लक्षणा उच्यते। लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता" )।

उपादानलक्षणा arises there where the लक्ष्यार्थ runs along with the मुख्यार्थ ( See next ).

रूढौ उपादानलक्षणा यथा—"श्वेतो धावति"। प्रयोजने यथा—'कुन्ताः प्रविशन्ति'। अनयोः ( उक्तोदाहरणयोः ) हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्त्तृतया अन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः

पुरुषादयश्चाक्षिप्यन्ते। पूर्वत्र प्रयोजनाभावात् रूढिः। उत्तरत्र तुकुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र च मुख्यार्थस्य आत्मनोपि उपादानम्। लक्षणलक्षणायान्तु परस्यैव उपलक्षणम् इत्यनयोर्भेदः। इयमेवाजहत्स्वार्था इत्युच्यते।

The author now has just before defined what is उपादान-लक्षणा i.e, where लक्षणा is resorted to for syntactical connection and meaning in a sentence and where along with लक्ष्यार्थ मुख्यार्थ is not given up. Thus उपादानलक्षणा is also with reference to रूढ़ि or प्रसिद्धि and with reference to प्रयोजन ( some special necessity ) : thus as an instance of उपादानलक्षणा in रूढ़ि we have श्वेतो धावति (a white horse is running), and as example of the sense in प्रयोजन we have "कुन्ताः प्रविशन्ति" (men with strong sticks are entering)। In both these examples श्वेत and कुन्त being inanimate cannot be reasonably connected with the actions of धावन and प्रवेशन। Hence there being no proper अन्वय of कर्त्ता and क्रिया in these cases, we are to bring in अश्व etc, or पुरुष etc, connected with these कर्त्ता e.g श्वेत and कुन्त, to establish our कर्त्तृ-क्रिया सम्बन्ध।

In the first case there is no special प्रयोजन् to attach अश्व etc with श्वेत, it comes through प्रसिद्धि, so for want of प्रयोजन it is a case of रूढ़ि। But in कुन्ताः प्रविशन्ति by कुन्त are brought in कुन्तहस्त पुरुष to denote strength of कुन्त, so it is an instance with reference to प्रयोजन। In both, the लक्ष्यार्थ

is adopted along with the मुख्यार्थ i.e, मुख्यार्थ is not given up but also taken in ( मुख्यार्थस्य उपादानम् ग्रहणम् )। But in लक्षणलक्षणा which will be defined next, the मुख्यार्थ points to लक्ष्यार्थ and मुख्यार्थ is given up ; This is the diff. between उपादान लक्षणा and लक्षणलक्षणा। This उपादानलक्षणा where मुख्यार्थ too is not given up is also called अजहत्स्वार्था लक्षणा। In other words the power by which a word retains its own अर्थ and conveys an additional sense is called अजहत्स्वार्था लक्षणा ( a लक्षणा where स्वार्थ ( own meaning ) is not given up )

[ N. B.—अजहन् अपरित्यजन् स्वार्थः मुख्यार्थः याम् इति बहुव्रीहिः। "जहत् स्वं पदं यं स जहत्स्वः ; सोर्थः यस्याम् इति बहुव्रीहिगर्भो बहुव्रीहिः। स्वशब्दस्य सर्वनामत्वात् पूर्वनिपाते प्राप्तेपि भाष्यप्रयोगात् राजदन्तादित्वात् वा पूर्वनिपातः न कृतः"—इति ज्ञानेन्द्रः ]।

मित—। आङ्गलटीका द्रष्टव्या।

लक्षणलक्षणामाह—

अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ॥७॥

रूढिप्रयोजनयोर्लक्षणलक्षणा यथा—'कलिङ्गः साहसिकः', "गङ्गायां घोषः" इति च। अनयोर्हि पुरुषतटयोः वाक्यार्थे अन्वयसिद्धये कलिङ्गगङ्गाशब्दौ आत्मानम् ( मुख्यार्थम् इत्यर्थः ) अर्पयतः ( यथायथं पुरुषतटबोधनोपयोगीकुरुतः )।

Now the author shows another kind of लक्षणा called लक्षणलक्षणा which is got when मुख्यार्थ is given up or reformed

and another meaning is taken up instead as an indicator to establish connection in a sentence. This is also known as जहत्स्वार्था लक्षणा, as in गङ्गायां घोषः where गङ्गा gives up its meaning altogether and means (points to) गङ्गातट। This power is hence also called जहत्स्वार्था लक्षणा as opposite to अजहत्स्वार्था (see ante)।

Thus our author also says—

यथा वा—

"उपकृतं बहु तत्र किमुच्यते, सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥"

अत्र अपकारादीनां वाक्यार्थे अन्वयसिद्धये उपकृतादयः शब्दाः आत्मानमर्पयन्ति (स्वार्थं त्यजन्ति)। अपकारिणं प्रति उपकारादिप्रतिपादनात् (अत्र) मुख्यार्थबाधः, वैपरीत्यलक्षणः सम्बन्धः, फलमपकारातिशयः। इयमेव जहत्स्वार्था इति उच्यते।

मितभाषिनी—सुगमा ॥

Here उपकृतादि is (sarcastically) applied to denote अपकार। उपकृत forsakes its मुख्यार्थ, points to अपकारातिशय and raises जहत्स्वार्थालक्षणा or लक्षणलक्षणा here.

**आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ॥** ताः पूर्वोक्ताःचतुर्भेदलक्षणाः।

**विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ॥८॥**
**सारोपा स्यात्, निगीर्णस्य मता साध्यवसानिका।**

Again the above four types of लक्षणा (e.g.—उपादानलक्षणा with रूढ़ि and प्रयोजन respectively=2 types ; लक्षणलक्षणा due to रूढ़ि and प्रयोजन=2 types ; total 4 types ) may be subdivided into 2 other varieties due to attribution ( आरोप ) and due to अध्यवसान (appropriation or merging) ; thus a सारोपलक्षणा is one in which the matter on hand appears to be something else ( अन्यतादात्म्यप्रतीति ) due to attribution or ascription ( and not appropriation or swallowing up), of some qualification having syntactical connection ; furthur लक्षणा is साध्यवसानिका when the matter on hand is appropriated or swallowed up by another or made totally identical with another due to affinity in the original meaning ( अन्यतादात्म्यप्रतीतिकृत् due to निगरण ) ।

In one the matter on hand and the thing attributed therein, stand distinct ( विषयस्य अनिगीर्णस्य ) ; in the other two are merged together ; in this their separate identity is ignored ( विषयस्य निगीर्णस्य ), the विषय appears appropriated and as another one. It is elsewhere said—"the diff. between सारोपलक्षणा and साध्यवसाना is that in the former, the विषय and the विषयिन् are both expressed ; while in the latter the विषय is निगीर्ण (swallowed up) in the विषयिन्" । (see next para for illustrations).

मित—। आरोपेण सह वर्त्तमाना इति सारोपा, बहुव्रीहिः । "स्वजन्य-पदार्थोपस्थितिद्वारा [illegible]  [illegible]च्छिन्नस्य अभेदप्रतीतिकृद् या

लक्षणा सा सारोपा भवेत् किल"। विषयनिगरणेन विषयिणः अभेदप्रतिपादनम् अध्यवसानम्। तेनैव सह वर्त्तते इति साध्यवसाना [ "तेन सहेतितुल्ययोगे" इति बहुव्रीहिः। "वोपसर्जनस्य" इत्यपि अत्र स्मर्त्तव्यम् ]। इत्यनयोर्भेदः।

विषयिणा अनिगीर्णस्य विषयस्य तेनैवसह तादात्म्यप्रतीतिकृत् सारोपा। इयमेव रूपकालङ्कारस्य वीजम्। रूढ़ौ उपादानलक्षणा सारोपा यथा—"अश्वः श्वेतो धावति"। अत्र हि श्वेतगुणवानश्वः अनिगीर्णस्वरूपः स्वसमवेतगुण-तादात्म्येन प्रतीयते। प्रयोजने यथा—"एते कुन्ताः प्रविशन्ति"। अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोपत्वम्। रूढ़ौ लक्षणलक्षणा सारोपा यथा—"कलिङ्गः पुरुषो युध्यते"। अत्र पुरु कलिङ्गशब्दयोः आधाराधेयभावः सम्बन्धः। प्रयोजने यथा—"आयुर्घृतम्"। अत्र आयुष्कारणमपि घृतं कार्य्यकारणभाव-सम्बन्धसम्बन्धि आयुस्तादात्म्येन प्रतीयते। अस्यवैलक्षण्येन अव्यभिचारेण आयुष्करत्वं प्रयोजनम्। यथा वा—राजकीये पुरुषे गच्छति (सति) "राजासौ गच्छति" इति। अत्र स्वस्वामिभावलक्षणः सम्बन्धः। यथा वा—अग्रमात्रे अवयवभागे "हस्तोयम्"। अत्र अवयवावयविभावलक्षण-सम्बन्धः। "ब्राह्मणोपि तक्षासौ"—अत्र तात्कर्म्यलक्षणः (सम्बन्धः)। इन्द्रार्थासुस्थूणासु (इन्द्रपूजार्थेषु स्तम्भेषु इत्यर्थः) "अमी इन्द्राः"—अत्र तादर्थ्यलक्षणः सम्बन्धः। एवमन्यत्रापि॥ निगीर्णस्य पुनर्विषयस्य अन्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्याश्चतुर्षुभेदेषुपूर्वोदाहरणान्येव।

( यथा—(i) श्वेतो धावति ; (ii) कुन्ताः प्रविशन्ति ; (iii) कलिङ्गः साहसिकः ; (iv) गङ्गायां घोषः प्रतिवसति । ] Also See Tr. before.

Again our author shows two varieties of लक्षणा ( लक्षणाया भेदद्वयमाह—यथा, शुद्धा लक्षणा तथा गौणीलक्षणा )—

**सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥८॥**
**सादृश्यात् तु मता गौण्यस्तेन षोडश भेदिताः ।**

मित—। पूर्वोक्ताः सकलाः लक्षणाः 'सादृश्येतरसम्बन्धाः' सादृश्यात् इतरे, तादृशाः सम्बन्धा हेतवः यस्याः तादृशाः । एताः शुद्धाः प्रोक्ताः । सादृश्यात् सम्बन्धात् तु लक्षणाः गौण्यः ( गुणेभ्य आगताः इति अण् प्रत्यये कृते, स्त्रियाम् ङीपि गौण्यः इति ) मताः । अतः अष्टप्रकारस्य भेदद्वयकल्पनया षोड़शविधा लक्षणाः इति फलितम् । ग्रन्थकृत् एतदेव स्पष्टयिष्यति— ] । Lakshana due to सादृश्यसम्बन्ध is गौणी, and it is शुद्धा due to other सम्बन्ध than सादृश्य ।

'ताः' पूर्वोक्ता अष्टभेदालक्षणाः । 'सादृश्येतरसम्बन्धाः' कार्य्यकारणभावादयः । अत्र शुद्धानां पूर्वोदाहरणान्येव । रूढौ उपादानलक्षणा सारोपा गौणी यथा—"एतानि तैलानि हेमन्ते सुखानि" । अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थम् उपादाय एव सार्षपादिषु स्नेहेषुवर्त्तते । प्रयोजने यथा—राजकुमारेषु-तत्सदृशेषु गच्छत्सु "एते राजकुमारा गच्छन्ति" । रूढौ उपादानलक्षणा साध्यवसाना गौणी यथा—"तैलानि हेमन्ते सुखानि" । प्रयोजने यथा—"राजकुमारा गच्छन्ति" । रूढौ लक्षणलक्षणा सारोपा गौणी यथा—"राजा गौड़ेन्द्रं कण्टकं शोधयति" । प्रयोजने यथा—गौर्वाहीकः ( वाहीकः देशविशेषः ।

तत्रस्थः पुरुषोऽपि वाहीकोः )। रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा—राजा कण्टकं शोधयति। प्रयोजने यथा—गौर्जल्पति॥ (N. B.—वाहीकदेशवासी पुरुषः वाहीकः। स गौरिव, अज्ञत्वादिगुणयोगात्।)॥

("गौर्वाहीकः" इत्यत्र शाब्दबोधक्रमं दर्शयन् परमतं निरस्यति विश्वनाथः)—

अत्र केचिदाहुः—गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते; ते गुणाः च गोशब्दस्य वाहीकार्थाभिधाने निमित्ती-भवन्ति (कारणीभवन्ति)। तदयुक्तम। गोशब्दस्य अगृहीतसङ्केतं वाहीकार्थम् अभिधातुम् अशक्यत्वात्, गोशब्दार्थमात्रबोधनाच्च। अभिधाया विरतत्वात्, विरतायाश्च पुनरुत्थापनाभावात् (=सकृदुच्चारितशब्दस्य सकृदर्थबोधकत्वनियमात् इत्यभिप्रायः)।

अन्ये च पुनर्गोशब्देन वाहीकार्थोनाभिधीयते। किन्तु स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते। तदप्यन्ये न मन्यन्ते। तथाहि—अत्र गोशब्दात् वाहीकार्थः प्रतीयते न वा। आद्ये (प्रतीतिपक्षे) गोशब्दादेव वा। लक्षिताद्वा गुणात् अविनाभावद्वारा। तत्र न प्रथमः। वाहीकार्थस्य असङ्केतितत्वात्। न द्वितीयः। अविनाभावलभ्यस्य अर्थस्य शाब्दे अन्वये प्रवेशासम्भवात्। शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्य्यते।

न द्वितीयः (न प्रतीयते इति द्वितीयः पक्षः न सम्भवति।) यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते, तदास्य गोशब्दस्य

वाहीकशब्दस्य च सामानाधिकरण्यमसङ्गतं स्यात् ॥ (उदाहरणे सामानाधिकरण्यादेव येन केनापि एकार्थप्रतिपादकत्वं सूच्यते)।

(अधुना स्वमतमाह)—

तस्माद् (दर्शितमतद्वयेपि दोषसत्त्वात्) अत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानो अज्ञत्वादि-साधर्म्यसम्बन्धात् वाहीकार्थं लक्षयति ॥ वाहीकस्य अज्ञत्वाद्यति-शयबोधनं प्रयोजनम् (इति काव्यप्रकाशकारः)। इयं च गुण-योगात् गौणी इत्युच्यते ॥ पूर्वा (सादृश्यातिरिक्तसम्बन्धनिबन्धना इत्यर्थः) तु उपाचरामिश्रणात् शुद्धा। (उपचारपदं वक्ति—) उपचारो हि नाम अत्यन्तं विशकलितयोः (निराकाङ्क्षयोः इतिभावः) शब्दयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा—अग्निमाणवकयोः ॥ शुक्लपटयोस्तु नात्यन्तभेदप्रतीतिः। तस्मादेव-मादिषु—शुद्धैव लक्षणा ॥ (Expl. easy)

अधुना पुनः (Now Subdivisions of 8 varieties of प्रयोजनलक्षणा are being enumerated) प्रयोजनलक्षणायाः भेदद्वयमाह ग्रन्थकृत् विश्वनाथः—

व्यङ्ग्यस्य गूढागूढत्वाद्द्विधा स्युः फललक्षणाः ॥१०॥

प्रयोजने या अष्टविधा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः।

The प्रयोजन which is suggested in the def. of लक्षणा may be clear or manifest (अगूढ) to all readers (अगूढ is सहजसंवेद्य) or inferential to witty persons (गूढ). In this way varieties of प्रयोजन लक्षणा may again be subdivided into 2 verieties (गूढ

प्रयोजना and अगूढ़प्रयोजना ) each. Thus altogether we get 8×2 =16 kinds of प्रयोजनलक्षणा।

तत्र गूढ़ः वाक्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः। यथा "उपकृतं बहुतत्र—" इत्यत्र ( पूर्वोक्तश्लोके )।

Now गूढ़व्यङ्ग in लक्षणा is to be known by mature intellect only ( परिपक्वबुद्धिविभववेद्य ) due to scrutinising of the meaning of sentences ( वाक्यार्थभावनाजन्य )। This is clear in the sloka "उपकृतं बहु तत्र किमुच्यते" etc as explained by our author before.

अगूढ़ः अतिस्फुटतया सर्वजनवेद्यः। यथा—

"उपदिशति कामिनीनां यौवनमद एव ललितानि"। अत्र 'उपदिशति' इत्यनेन 'आविष्करोति' इति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते।

पुनरपि तस्या द्वैविध्यमाह—

धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि द्विधा॥ एता अनन्तरोक्ताः षोड़शभेदा लक्षणाः ( प्रयोजनलक्षणाइत्यर्थः ) फलस्यधर्म्मिगतत्वेन धर्म्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः।

मित—, धर्मी लक्ष्यः। तद्वृत्तिपदार्थो धर्मः।

(Thus धर्मी means that which is लक्षणाविषयीभूत or लक्ष्य ie the object pointed and implied by लक्षणा। And धर्म means the qualities or meanings suggested from the लक्ष्यार्थ or लक्ष्य aim or object)।

तत्र दिङ्मात्रं यथा (one instance is being shown here)—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढ़ं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीराभव॥

( विरहिणः श्रीरामस्य उक्तिरियम् )।

मित्र—। स्निग्धश्यामलकान्त्या लिप्तं वियत्नभः यैः तादृशाः, तथा वेल्लद्बलाका घनाः। वाताः शीकरिणः। पयोदसुहृदाम् मयूराणाम् कलाः मधुरा आनन्दकेका कामं दृढं सन्तु। कठोरहृदयः रामोऽस्मि अतः सर्वं सहे, वैदेही तु कथं भविष्यति। मेघालोके अधीरा भविष्यति। अत आह—"हा देविधीराभव"।

अत्र अत्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये, तस्यैवातिशयः फलम्। 'गङ्गायां घोषः' इत्यत्र तटे शीतत्व-पावनत्वरूपधर्मस्यातिशयः फलम्।

Here the धर्मिन् or लक्ष्य वस्तु is Rama who is to tolerete excess of दुःख : and this is the प्रयोजन of लक्षणा here ; but in our गङ्गायां घोषः the incentive of लक्षणा is to denote the धर्म or the quality of शीतत्व. and पावनत्व। Thus we have seen धर्मिगत व्यङ्ग्यार्थ and धर्मगत वङ्ग्यार्थ in लक्षणा here।

तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः।११॥

रूढ़ौ अष्टौ ( लक्षणाः ), फले प्रयोजने इत्यर्थः द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः।

Thus लक्षणा in रूढ़ि is of 8 sorts (see before) ; and as seen

just now लक्षणा in प्रयोजन is of 32 types, and in all we have 40 types of Lakshana.

किञ्च ( moreover )—

पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ।

ताः अनन्तरोक्ताः चत्वारिंशत्भेदा ( लक्षणाः पदगतत्वेन वाक्यगतत्वेन च द्विधा भूत्वा योगे अशीतिप्रकारा लक्षणा भवन्ति इति फलितम् ) । तत्र पदगतत्वे यथा—"गङ्गायां घोषः" ।

वाक्यगतत्वे यथा—"उपकृतं बहु तत्र" इति । एवमशीति-प्रकारा लक्षणा ॥

Thus again लक्षणा (i.e., above 40 varieties of लक्षणा ) being in पद and in वाक्य results in 80 varieties. अथ व्यञ्जनामाह—

विरतास्वभिधाद्यासु ययार्थो बोध्यते परः ।

सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥१२॥

"शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इति नयेन अभिधा-लक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु, यया अन्यः अर्थो बोध्यते सा शब्दस्य अर्थस्य प्रकृति-प्रत्ययादेश्च शक्तिः ( वृत्तिः व्यापारो वा ) व्यञ्जनध्वनन-गमन-प्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ।

Now the virtue or power whereby something else is signified other than what is implied by a शब्द or its अर्थ through अभिधाशक्ति or लक्षणाशक्ति or तात्पर्याख्यशक्ति etc, and this

appearing to the genuises when the forces of अभिधा and लक्षणा and तात्पर्य्या are exhausted ( उपक्षीण ), is called the व्यञ्जनावृत्ति or व्यञ्जनाशक्ति of शब्द or its अर्थ। [The maxim 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" says that "words, their meanings or works if ceased then their action also ceases," so the power of अभिधा or लक्षणा or तात्पर्य्या even (taking it as a separate वृत्ति as sponsored by some), ceases by signifying their functions; then further व्यञ्जना appears to the advanced or matured intellect implying some other internal thing.

[As already said entire तात्पर्य्यार्थ is taken within व्यञ्जना by most Rhetorincians, by our author too; but some old treatises take it as separate from व्यञ्जना, it is what is apparently established from a sentence; cp—"यद्देव विधेयं तावत्येव तात्पर्य्यम्"—pradipa; see intro. and here ahead also].

[*N. B.*—In other words व्यञ्जना is the power by which senses expressed, applied or suggested give rise to another sense comprepended by appreciating genius through the peculiar character of—(1) the speaker, (2) the person spoken to (3) indication of emotions (4) the sentence (5) the implied meaning (6) the proximity of others (7) context (8) time (9) place etc.

So also it is elsewhere said—

"मुख्यार्थ वाधग्रहनिरपेक्षबोधजनको मुख्यार्थ संवद्धासंवद्ध-साधारणः प्रसिद्धाप्रसिद्धार्थ विषयकः वक्त्रादिवैशिष्ट्यज्ञान प्रतिभाद्युद्बुद्धः संस्कारविशेषः व्यञ्जना इति"।

See also infra here].

तत्र—अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥१३॥

अभिधामूलामाह—अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥१४॥

आदिशब्दात् विप्रयोगादयः।

Now this व्यञ्जना (suggestive force) is got or is dependent on either अभिधा (the directly stated meaning.) or लक्षणा (the secondary meaning); Then again अभिधामूला व्यञ्जना is got there where the direct meaning or अभिधाशक्ति having signified its contextual particular meaning ( प्राकरणिकार्थ ) ceases ( for सकृत् उच्चारितः शब्दः सकृदर्थं गमयति ), but due to संयोग or some well-known convention then a further meaning is implied later on due to suggestive force or व्यञ्जना owing to various meanings of a word used ; in otherwords, this is possible of words having various meanings ( अनेकार्थकशब्द ); op— प्राकरणिकमर्थं बोधयित्वा अभिधायां विरतायाम् अप्राकरणिकबोधे व्यञ्जना अभिधान्तरमपेक्षते इति अभिधामूलत्वम् अस्याः।

Thus words having more than one meaning, may imply another meaning too either from its particular contextual sense due to संयोग or its well-known संबन्ध with something else, as in व्यर्थाङ्गयेषामपि मेदिनीभृताम् in Magha (मेदिनीभृत् means both राजा and पर्वत)। By संयोगाद्य or आदि here is taken विप्रयोग etc as will be stated later on here and hinted by us;

विप्रयोग is त्याग or विश्लेष। Thus संयोग is प्रसिद्धसम्बन्ध in one meaning, of words having various meanings (due to context), and विप्रयोग is forsaking of some convention and denoting a particular meaning of words having various or many meanings. Thus it is said—

उक्तं हि—

संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं, शब्दस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ इति

Of words having many meanings, there being no नियम or certainty as to which meaning is to be taken (अनवच्छेदे, एकप्रतिपत्तौ अनियमे सति), a particular sense is attached (विशेषस्मृतिहेतु), and this arises due to संयोग of context, विप्रयोग disconnection of some sense, साहचर्य्य or association or syntactical connection (एकस्मिन् कार्य्ये परस्परापेक्षित्वम् साहचर्य्यम्), विरोधिता or non-existence of an other (सहानवस्थान), अर्थः or प्रयोजन i.e., some necessity, प्रकरण or context of sayer or hearer (वक्तृश्रोतृबुद्धिस्थित), लिङ्गम् some cheracteristic meaning in spite of several ones; अन्यशब्दसन्निधि being used along with other words; सामर्थ्य or having some cause (कारणता); औचिती or capability in one sense due to प्रकृतवस्तु matter on hand, देश or special place; काल or special time, व्यक्ति or male, female or nueter

gender, स्वरादयः i.e., उदात्त, अनुदात्त or स्वरित pronunciation of words; thus (we say) a word denoting a special meaning in spite of having several ones is due to संयोग विप्रयोग, साहचर्य etc as is illustrated below :—

"सशङ्खचक्रो हरिः" इति शङ्खचक्रयोगेन हरिशब्दो (अनेकार्थत्वयुक्तः अपि) विष्णुमेवाभिधत्ते (संयोगवशात्); "अशङ्खचक्रो हरिः" इति तद्वियोगेन (शङ्खचक्रादिवियोगेन) तमेव (अर्थमभिधत्ते—विप्रयोगवशात्); 'भीमार्जुनौ" इति अर्जुनः पार्थः (इत्यर्थः साहचर्यात्); "कर्णार्जुनौ" इति कर्णः सूतपुत्रः (कर्णस्य अन्यार्थे विरोधितासत्त्वात्); "स्थाणुं वन्दे भवोच्छेदाय' इति स्थाणुः शिवः (मुक्तिप्रयोजनात्); "सर्वं जानाति देवः" इति देवो भवान् (वक्तृश्रोतृवशात्); "कुपितो मकरध्वजः" इति मकरध्वजः कामदेवः (लिङ्गवशात् वा शब्दवेद्य धर्मवशात्); "देवः पुरारिः" इति पुरारिः शिवः (अन्यशब्द-सन्निधानात्"); "मधुना मत्तः पिकः" इति मधुर्वसन्तः (सामर्थ्यात्); "पातु वो दयितामुखम्" इति मुखं साम्मुख्यम् (औचित्यात्); "विभाति गगने चन्द्रः" इति चन्द्रः शशी (देशवशात्); "निशि चित्रभानुः" इति चित्रभानुर्वह्निः (कालवशात्); "भवति रथाङ्गम्" नपुंसकव्यक्त्या रथाङ्गम् चक्रम् (पुंस्त्वे चक्रवाकद्योतकः इत्यर्थः); स्वरस्तु (उदात्त-अनुदात्तस्वरित इति) वेदे एव विशेषप्रतिपत्तिकृत् न तु काव्ये इति तस्य विषयः अत्रनोदाहृतः।

[N. B.—"इन्द्रशत्रुर्वर्धस्व" इत्यत्र इन्द्रशत्रुशब्दे बहुव्रीहितत्पुरुषयोः स्वरभेदःस्यात् ; स च वेदे मन्त्रे विशेषार्थविशेषप्रतीतिकृत् न काव्ये" ]।

इदञ्च केपि असहमाना आहुः—"स्वरोपि काक्वादिरूपः ('काकुः' वचनभङ्गिविशेषः = intonation) काव्ये विशेष-प्रतीतिकृत् एव। उदात्तादिरूपोपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेव" इति।

"अतः एतद्विषये उदाहरणमुचितेव" इति—।

Being unable to accommodate themselves to the above view "that pitch of sound (स्वर) is not to be taken into account in काव्य", some rhetoricians declare that even in kavyas, काकु or वचनभङ्गिविशेष or intonation has a power to give special significance in meaning; further according to the declaration of Bharata Muni in his (नाट्यशास्त्र) that particular स्वर is to be adopted in sentences of शृङ्गार, हास्य etc, the स्वर i.e., उदात्त, अनुदात्त and स्वरित has place to denote special or particular sentiments (रसविशेषप्रतीतिकृत्)। Thus Bharati Muni says—हास्यशृङ्गारयोः स्वरितोदात्तम्, वीररौद्राद्भुतेषु उदात्तस्वरितम्, करुणवीभत्सभयानकेषु उदात्तस्वरितमुत्पादयेत्"। (Note also Panini Sutras "उच्चैरुदात्तः। नीचैरनुदात्तः। समाहारः स्वरितः" here; and break. स्वरितोदात्त etc as-पूर्वं वा आदौ स्वरितः परम् वा पश्चात्उदात्तः)।

Hence these retoricians further say—

That illustration is necessery with regard to स्वर too; this being विशेषप्रतीतिकृत् even in काव्य (as herein said).

But our author refutes this their view and says—

तन्न। तथाहि—स्वराः काक्वादयः उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तम् अनेकार्थशब्दस्य एकार्थनियन्त्रणरूपम् विशेषम्।

But this is not the real fact; The real fact is—sounds (स्वर) be it काकु etc or उदात्त etc show a special meaning by way of व्यङ्ग्य and not अभिधेय; so it does not signify one restricted meaning of words having many meanings as said by us in our अभिधामूलकव्यञ्जना।

किञ्च—यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावात् अनियन्त्रितयोरप्यर्थयोः अनुरूपस्वरवशेन एकत्रनियमनं वाच्यं तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः। न च तथा। अतएवाहुः श्लेषनिरूपणप्रस्तावे—"काव्यमार्गे स्वरो न गण्यते" इति च नयः। इत्यलम् उपजीव्यानां व्याख्यानेषु कटाक्षनिक्षेपेण।

More over, if in some instance of words having more than one meaning, though owing to want of contextual connection both two meanings may appear to the hearer or reader, one special meaning is restricted there too, owing to self-same similar sound (स्वर), then in such case we say श्लेष cannot or should not be accepted—श्लेष then ceases to be a figure (figure of speech); but it is not so—श्लेष is accepted as a figure; so almost all rhetoricians under श्लेष section say—स्वर is not to be taken into account in काव्य; and this is the

custom or usage. And I do not want to make further insinuation with regard to the above explanatory view of earlier professors or Rhetoricions on whom I am to depend.

("काकादिरूपः" इत्यत्र) आदिशब्दात् "एतावन्मात्रस्तनी—" इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारत्वम् ( उपलक्षितम् इत्यर्थः ) ॥

एवम् एकस्मिन् अर्थे अभिधया नियन्त्रिते या शब्दार्थस्य अन्यार्थबुद्धिहेतुः शक्तिः सा अभिधामूला व्यञ्जना ।

Thus of शब्द and अर्थ, when one meaning being retricted by the power of अभिधा, another meaning arises due to another force ( अन्यार्थबुद्धिहेतुः शक्तिः ) of शब्द and अर्थ that is called अभिधामूला व्यञ्जना ; whereas in श्लेष etc both the meaning are वाच्य and arises simultaneously and not when one meaning ceases on ; thus Rasagangadhar says "श्लेषे द्वयोरर्थयोर्वाच्यत्वम्, एककालत्वञ्च ; इह त्वेकस्य वाच्यत्वम् अन्यस्य व्यङ्ग्यत्वम्, भिन्नकालत्वञ्च" । Anandavardhana also opines "यत्र शब्दशक्त्या साक्षादलङ्कारो वाच्यः प्रतिभासते स सर्वः श्लेषविषयः । यत्र तु शब्दशक्त्या वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः" ।

Thus having established his point that स्वर is not to be taken into account in काव्य with regard to व्यञ्जना, our author exemplifies अभिधामूला व्यञ्जना below—

यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनी-भुजङ्ग-महाकविशेखरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम्—

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥

अत्र प्रकरणेनाभिधेये उमावल्लभशब्दस्य उमानाममहादेवीवल्लभ-भानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभ-रूपोऽर्थः बोध्यते। एवमन्यत्।

Take for instance the sloka "दुर्गालङ्घितविग्रहः" of my father, a formost poet conversant in 14 languages named Chandrasekhara the able manipulator of peace and war. In this sloka the word उमावल्लभ restricted by context and sense refers to the wife named उमा of king Bhanudeva; still this meaning having ceased the word means by व्यञ्जना, गौरीवल्लभश्शिव। Similar are other instances too of अभिधामूला व्यञ्जना। The sloka should be thus construed :—

दुर्गालङ्घितविग्रहः (दुर्गैः अलङ्घितः अव्यवहितः विग्रहः युद्धं यस्य—दुर्गव्यवधानं विनैव सम्मुखयोद्धा इत्यर्थः) तेजसा मनसिजं (कामं) संमीलयन् (पराभवन्) प्रोद्यद्राजकलः (प्रोद्यत् अभ्युदययुक्तं राजकं राजसमूहं लाति वशरूपेण गृह्णाति यः) गृहीतगरिमा (प्राप्तगौरवः) भोगिभिः (पुरुषैः) विष्वग्वृतः (सर्वतः परिव्याप्तः) नक्षत्रेशकृतेक्षणः (अन्यक्षत्रेशे दत्तेक्षणः न भवति तादृशः, स्वयं मण्डलेश्वरत्वात्) गिरिगुरौ (शिवे) गाढां रुचिं धारयन्, गामाक्रम्य (पराक्रमेण पृथिवीमाक्रम्य) विभूतिभूषिततनुः उमावल्लभः (तदाख्यो राजा) राजति॥ शिवपक्षे—दुर्गादेव्या लङ्घितविग्रहः (अर्धनारीश्वरत्वात्), कामदेवं तेजसा लङ्घयन्, प्रोयन्ती राजकला

चन्द्रखण्डं यस्य तादृश:, भोगिभि: सर्पै: विभ्रमद्धत:, नवलेशेन चन्द्रेण कृतेचरु:, गिरिगुरौ हिमालये रुचिं धारयन् गाम् वाहकाम् वृषभमाक्रम्य विभूतिभूषिततनु: ( भस्मभूषितगात्र: ) उमावल्लभ: शिव: राजति ।

[N. B.—By accepting अभिधामूला व्यञ्जना, our author refutes the view of Bhatta Lollata and others that just as a single arrow of a strong man destroys one and all by and by, a single word used by a good poet brings before us by a single power called अभिधा, the sense of it, teaches us its अन्वय and also the suggested sense as well ( व्यङ्ग्यार्थ ) ; प्रदीपकार also accepts both अभिधामूला and लक्षणामूला व्यञ्जना as here, cp—"किञ्च न लक्षणाव्यञ्जनयोरभेद: । लक्षणामुपजीव्य अपितद्व्यापारात् । नापि लक्षणानुगतमेव ध्वननम् इति ध्वनेस्तल्लक्षणमिति वाच्यम् । अभिधोपजीवनेनापि तद्भावात्" । ]

लक्षणामूलामाह—

लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥१५॥

"गङ्गायां घोष:" इत्यादौ जलमयार्थबोधनात् अभिधायां, तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्व-पावनत्वाद्यतिशयादि: बोध्यते सा लक्षणामूला व्यञ्जना ।

A व्यञ्जना for which लक्षणा is resorted to and for which लक्षणा is a necessity as well, and which is suggested through लक्षणा only, is called a लक्षणामूला व्यञ्जना । Thus in गङ्गायां घोष: (There is आभीरपल्ली on Ganges), अभिधा fails or ceases for it denotes जलमयगङ्गा, लक्षणा is resorted to, to signify the

meaning of तटादि very near to गङ्गा, and further शीतत्व, पावनत्व of गङ्गा are attributed to घोष by the power of व्यञ्जना। Hence here we have लक्षणामूला व्यञ्जना। (And for such implied meaning of words or वाक्य, व्यञ्जनाशक्ति must be resorted to):

एवं शाब्दीं व्यञ्जनामुक्त्वा आर्थीमाह—

वक्तृबोधव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानांकाकोश्चेष्टादिकस्य च ॥१६॥

वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा। ('व्यञ्जना' इति सम्बध्यते)।

Owing to particularity of the speaker, of the object said, or sentence spoken before others, of context, place, and time and of intonation and of outward manifestations as well, the particular suggestive sense that possibly arises is called अर्थसम्भवा व्यञ्जना। Construe—"वक्त्रादिचेष्टादीनां वैशिष्ट्यात् वलक्षण्यज्ञानात् जायमाना या शक्तिः अन्यार्थं बोधयति या अर्थसम्भवा व्यञ्जना"।

तत्र वक्तृवाक्यप्रस्तावदेशकालवैशिष्ट्ये (आर्थी व्यञ्जना) यथा मम—

"कालो मधुः कुपित एष पुष्पधन्वा,
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु—
र्दूरे पतिः कथय किं करणीयमद्य ॥

अत्र 'एतं देशं प्रति शीघ्रं प्रच्छन्नकामुकः त्वया प्रेष्यताम्' इति सखीं प्रति कयाचित् व्यज्यते।

मित—। अत्र वक्तुः कामुकत्वात्, कालदेशयोः कामजागकत्वात्, प्रस्तावस्य सुरतविषयत्वात् एवं व्यज्यते इत्यर्थः ।

बोद्धव्यवैशिष्ट्ये यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मिष्टरागोऽधरः
नेत्रे दूरमनञ्जने पुलकितातन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति वान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

अत्र तदन्तिकमेव रन्तुं गतासीति विपरीतलक्षणया लक्ष्यम् । तस्य च रन्तुमिति व्यङ्ग्यप्रतिपाद्यं दूतीवैशिष्ट्यात् बोध्यते ।

This sloka is an instance of अर्थसम्भवा व्यञ्जना owing to the particularly of the ( बोद्धव्य ) i.e. the intended meaning to be spoken of. The lady love (नायिका) sent a confidante (दूती) to bring her lover ( नायक ) ; but the दूती enjoyed the नायक there secretly, and accounted for her delay that she went to the pool there to take bath.

All this meaning e.g. the दूती went there for enjoyment ( रन्तुं गता ) is indicated from the signs spoken of here. विपरीतलक्षणा is explained as "तत्समीपगमनाभावस्य अभावबोधनात्" । And the suggested meaning of रमण is due to दूतीवैशिष्ट्य ।

अन्यसन्निधिवैशिष्ट्ये ( व्यङ्ग्यार्थव्यञ्जनमाह )—
"उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ वलाआ ।
णिम्मलमरअअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥"

["पश्य निश्चलनिःष्पन्दा बिसिनीपत्रे राजते बलाका।
निर्मलमरकत-भाजनपरिस्थिता शङ्खशुक्तिरिव॥"]

अत्र बलाकायाः निःष्पन्दत्वेन विश्वस्तत्वम्, तेन (तेन व्यङ्गेन) अस्य देशस्य विजनत्वम्, अतः सङ्केतस्थानमेतत् इति कयापि सन्निहितं प्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थाननिर्जनत्व-रूपं व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम्।

Here the special व्यङ्ग्यार्थ, as निर्जनत्व of the place, is the meaning, and this is due to the presence of निश्चलबलाका etc there (अन्यसन्निधिवैशिष्ट्य)।

"भिन्नकण्ठध्वनिः धीरैः काकुरित्यभिधीयते" इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्य (उपजीव्य-भरतादिग्रन्थेभ्यः) ज्ञातव्याः; एतद्वैशिष्ट्ये (आर्थी व्यञ्जना) यथा—

गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेसौ॥

अत्र 'नैष्यति' अपि तर्हि "एष्यत्येव" इति काका व्यज्यते।

काकु is वचनभङ्गिविशेष or intonation; so by such intonation here in the speech from नैष्यति, the significance (व्यञ्जना) comes that he will surely come (एष्यत्येव)। Comp—"स्वराः काक्वादयः व्यङ्ग्यरूपमेव प्रत्याययन्ति" ante.

चेष्टावैशिष्ट्ये यथा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥

अत्र 'सन्ध्या सङ्केतकालः' इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते ।

Here the implied sense that "evening is the fit time for union" given to a विट (or उपपति) by a lady-love, is got from निमीलन of the लीलापद्म (taken on her hand); (aristrocrats at that time used पद्म on their hands for sporting purpose.—cp :"हस्ते लीलाकमलम्" and लीलारविन्द' भ्रमयाञ्चकार); construe—हसत् (विकसत्) लीलापद्मं विदग्धया नेत्रार्पिताकूतं (नेत्राभ्यामर्पितम् आकूतम् अभिप्रायः यत्र, तत् यथा तथा) निमीलितम् ।

एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् ।

So we are to understand आर्थी व्यञ्जना from particularity of वक्ता etc taken separately (व्यस्त) or as a whole (समस्त) ।

त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥१७॥

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अपि अनन्तरोक्ता व्यञ्जनास्त्रिविधाः । तत्र वाच्यार्थस्य व्यञ्जना यथा—"कालो मधुः—" इत्यादि । लक्ष्यार्थस्य यथा "निःशेषच्युतचन्दनं स्तनतटं—"इत्यादि । व्यङ्ग्यार्थस्य यथा—"उअ णिच्चल—" इत्यादि । प्रकृतिप्रत्ययव्यञ्जकत्वं तु प्रपञ्चयिष्यते ।

Now again अर्थ being of 3 varieties, as वाच्यार्थ, लक्ष्यार्थ, व्यङ्ग्यार्थ all the above said व्यञ्जना are of 3 kinds; thus वाच्यार्थव्यञ्जना are to be seen in "कालोमधुः" etc as said before. लक्ष्यार्थव्यञ्जना in "निःशेषच्युतचन्दनं" and व्यङ्ग्यार्थव्यञ्जना in 'उअ णिच्चलं etc (see ante); प्रकृतिप्रत्यय व्यञ्जना will be stated later on.

शब्दबोध्यो व्यनक्त्यर्थः शब्दोप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥१८॥

यतः शब्दो व्यञ्जकत्वे अर्थान्तरमपेक्षते, अर्थोपिशब्दम्। तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिता अवश्यमङ्गीकर्त्तव्या।

meaning (अर्थ) is suggested from words and words depend on meaning thereof ; so one being suggested, another helps this suggestion ; that is, in शब्दव्यञ्जना it is dependent on अर्थ and in अर्थव्यञ्जना it is dependent on शब्द। Both are inter-related ; either may be promiment, but the other too is a helper as well. (cp शाब्द्यां व्यञ्जनायामर्थस्य, आर्थ्यामपि शब्दस्य उपयोगित्व-मस्ति)।

अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधोमतः।
शब्दोपि वाचकस्तल्लक्षको व्यञ्जकस्तथा ॥१९॥

अभिधोपाधिकः वाचकः। लक्षणोपाधिकः लक्षकः। व्यञ्जनोपाधिकः व्यञ्जकः।

Thus having ascertained the three forces (Sakti) of अभिधा लक्षणा and व्यञ्जना due to meaning, it is said that शब्द too are of three varieties—being वाचक लक्षक or व्यञ्जक। It is वाचक when depending or अभिधाव्यापार ; it it लक्षक when depending or लक्षणाव्यापार, and it is व्यञ्जक when depending on व्यञ्जना व्यापार—। (N. B.=उपाधि here means व्यापार)॥

Now one set of old logicians known as अभिहितान्वयवादिन् (e g. some नैयायिक-भाट्टमीमांसकाः) accept तात्पर्य्याख्यवृत्ति as separate from अभिधा or लक्षणा—। Thus it is said by these—

किञ्च—

तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।
तात्पर्य्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ॥१०॥

अभिधाया एकैकपदार्थबोधनविरमात् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिः । तदर्थश्च तात्पर्य्यार्थः । तद्बोधकं च वाक्यम्—इत्यभिहितान्वयवादिनांमतम् ॥

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः ॥

Moreover the अभिहितान्वयवादिन् says that there is another वृत्ति ( व्यापार ) of words named तात्पर्याख्य—it expresses the full meaning of words in sentences, as diff. from the particular meanings of separate words; and a sentence signifies its full meaning and syntactical connection only by force of this वृत्ति ।

अभिधा, etc being ceased by expressing their powers and meanings, a further वृत्ति named तात्पर्याख्य is to be resorted to, to express the special significance due to पदार्थान्वय । For this we are to adopt तात्पर्याख्यवृत्ति and a वाक्य hints to it for signifying complete sense. Thus acc. to these घटं करोति means "घटवृत्तिकर्मत्वानुकूलाकृतिः" ; but घट is a pot, the affix अम denotes कर्मता of this, करोति means कृति, none denotes वृत्ति, so वृत्तिता of these appears from their connection and due to the force of तात्पर्याख्यवृत्ति । So we are to accept this तात्पर्याख्यवृत्ति ।

But the other set of logicians and mimansakas (followers of प्रभाकर are called अन्विताभिधानवादिनः) reject this तात्पर्य्याख्य वृत्ति ।

'अभिहितान्वयवादिनां नैयायिकभाट्टमीमांसकानामाशयः—'घटं करोति' इत्यादौ घटवृत्तिकर्मत्वानुकूला कृतिः इत्यर्थो बोध्यते। तत्र घटपदस्य घटोऽर्थः, अम्प्रत्ययस्य कर्मता, वृत्तिता तु न कस्यापि, इत्यपदार्थोऽपि वृत्तिता तात्पर्य्यवशात् अनयोः संसर्गविधया भासते। अन्विताभिधानवादिनः प्राभाकरास्तु—"अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिः। व्यवहारेण अन्वितस्य एवोपस्थापनात् तत्रैव शक्तिग्रहात्। एवञ्च क्रियाकारकयोः प्रथमतः एव अन्वयबोधो जायते ततः शक्तिग्रहः। पदविशेषसमभिव्याहारात्तु विशेषस्मृतिरिति किं तात्पर्य्याख्यवृत्तिस्वीकारेण इत्याहुः" ॥

Explain the word अभिहितान्वयवादिन् thus—"अभिहितानां स्वस्ववृत्त्या पदैः उपस्थापितानाम् अर्थानामन्वयः इति ये वदन्ति ते अभिहितान्वयवादिनः"।

So also interpect the word अन्विताभिधानवादिन् thus—"पदानि अन्वितानि भूत्वा अनन्तरं विशिष्टम् अर्थं बोधयन्ति इति ये वदन्ति ते अन्विताभिधानवादिनः"।

N. B.—Some old logicians and Bhattamimamsakas followers of Kumarila Bhatta called अभिहितान्वयवादिन् hold तात्पर्य्याख्यवृत्ति of sentences. It is something else than वाच्यादि अर्थ (अभिधार्थ), and appears to us after the sentence is uttered, due to आकाङ्क्षा (anxiety to know) योग्यता (inter-relation) आसत्ति (proximity). Thus in "घटं करोति" we understand घट (pitcher) only from घट and अम् प्रत्यय after घट gives कर्मता to it and action (करण) comes from करोति but वृत्तिता (as घटवृत्तिकर्मत्वानुकूला कृतिः) is not the meaning

of any of these, it comes from connection ( अन्वय ) of these words, hence something अपदार्थ ( not implied by used words ) appears due to तात्पर्य्य ( cp "अपदार्थोऽपि वृत्तिता तात्पर्य्यवशात् अनयोः संसर्गविधया भासते" ) ।

On the other hand some logicians and mimamsakas like Prabhakara and others called अन्विताभिधानवादिन: hold that first in a sentence words have power ( शक्ति ) to point to the desirable meaning due to अन्वय ( अन्वयरूपे वाक्यार्थे पदानां शक्तिः । अन्वितस्य एव शक्तिग्रहात् ) । And we need not say that something अपदार्थ वा अवाच्यार्थ वा तात्पर्य्य only is the वाक्यार्थ ; here there is पदविशेषसमभिहारात् विशेषस्मृतिः ।

N.B.—(1) As already said this तात्पर्य्याख्य वृत्ति is unsuitable for व्यञ्जना । व्यञ्जना goes still ahead ; व्यञ्जना is rather a fourth or तुरीया वृत्ति । cp "अभिधालक्षणातात्पर्य्याख्यासुतिसृषु वृत्तिषु उपक्षीणासु, ययान्यार्थः बोध्यते व्यञ्जना नाम सा" ante.

(2) Vidyanatha our author and others do not accept this separate तात्पर्य्याख्य वृत्ति । तात्पर्य्यार्थ may sometimes be included in व्यञ्जना but it (व्यञ्जना ) goes still ahead.

(3) ध्वनि or व्यञ्जना cant be got from this तात्पर्य्याख्यवृत्ति । Hence in Intro. P. xliii line 14 read "Nor ध्वनि can be got from तात्पर्य्याख्यवृत्ति of अभिहितान्वयवादिन् or from पदान्वयात् विशेषस्मृति of the अन्विताभिधानवादिन् ।"

Here ends the second chapter of Sahityadarpana.

# तृतीयः परिच्छेदः

अथ कोऽयं रस इत्युच्यते—

> विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।
> रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ॥१॥

Having thus defined काव्य and having said of वाक्य that go to constitute काव्य and which is inseparable therefrom, the author now proceeds to explain रस or sentiment (better poetic sentiment) which is the soul of काव्य and admitted to define काव्य ( see under वाक्यं रसात्मकं काव्यम् ) ।—(For रस too we are to depend on व्यञ्जनावृत्ति) ।

[Now रस or poetic sentiments are nine in number (see Intro. also)—sentiments of love, smile, grief, anger, energy, fear, disgust and wonder, also quietitude ( शान्त );—several rhetoricians and Mammata in काव्यप्रकाश takes 8 रस in dramas and 9 in काव्य ।

Jagannath and Vidyadhara accept 9 रस in dramas too and refute those who reject शान्तरस there—compare "केचित्तु शान्तस्य शमसाध्यत्वात् नटे च तदसम्भवात् अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते— इत्याहुः, तन्नापरे न क्षमन्ते । तथा हि 'नटस्य शमाभावात्' इति हेतुरसङ्गतः । सामाजिकानां शमवत्त्वेन तत्र रसोद्बोधे बाधकाभावात्···अतः नाट्येऽपि शान्तोरसोऽस्तीतिव्यवस्थापितम् । प्रबोधचन्द्रोदयस्य नाटकत्वं स्वीकृतं च सर्वैः ।"]

Lasting or permanent condition of the mind, are in writings of poets called स्थायीभाव; the feelings of love etc though transient their impressions are lasting or permanent; and each of these nine रस create nine varieties of स्थायीभाव which are called up in the mind whenever a रस is perceived. The causes, effects and the attendant subordinate feelings of these स्थायीभाव are in poetry or drama etc called respectively by the names of विभाव, अनुभाव and सञ्चारिभाव or व्यभिचारिभाव; so the author here says—what is made manifest (व्यक्त) by विभाव (आलम्बनाश्रय and उद्दीपनाश्रय) i. e. the generating and exciting cause, by अनुभाव the external manifestations, by सञ्चारिभाव or attendant feelings, is called a रस; thus the permanent impressions of the sentiments of love etc. (रत्यादि) attain the state of a रस to the sympathetically disposed ones (सचेतसाम्)"

Now the question arises what are विभाव, अनुभाव and व्यभिचारिभाव or सञ्चारिभाव, so our author says—

**विभावादयो वक्ष्यन्ते। सात्त्विकास्त्वनुभावरूपत्वात् न पृथगुक्ताः। व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसः। न तु दीपेन घटइव व्यज्यते।**

विभाव etc will be spoken later on; still for readers' facility we say that विभाव of a रस are its generating causes and विभाव are of 2 kinds आलम्बनविभाव and उद्दीपनविभाव। The person (नायक वा नायिका) with reference to whom our रस

arises is its आलम्बन विभाव (cp. आलम्बनं नायिकादिः तमालम्ब्य रसोद्गमात्" infra) and things which excite the feeling of a रस are उद्दीपन विभाव, as moon, vernal season, malaya wind in case of शृङ्गाररस। Bharata says "विभाव कस्मादुच्यते। विभावः विज्ञानार्थः। बहवार्थाः विभाव्यन्ते अनेन यस्मात्तेनायं विभावः इति संज्ञितः"। And the outward manifestations, external gestures, glances etc are called अनुभाव (cp "भ्रूविक्षेपकटाक्षादयो रसपोषकारिणोऽनुभावाः"—Dasarupa; and Bharata says.—कस्मात् अनुभाव उच्यते। यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम्)। The विभाव are causes of a स्थायिभाव, अनुभाव are the effects of स्थायिभाव; and व्यभिचारिभाव are attendant feelings of a स्थायीभाव they are transient subordinate attendant feelings which rise up and go down like waves in an ocean of स्थायिभाव; they manifest themselves as it were to nourish the permanent feelings and disapper as their function is discharged; thus प्रभाकर has "ये तु उपकर्तुमायान्ति स्थायिनं रसमुत्तमम्। उपकृत्य चगच्छन्तिते मता व्यभिचारिणः"। These सञ्चारि or व्यभिचारिभाव i.e. evanescent feelings are 33 as will be seen later on. Besides these भाव there are 8 सात्त्विकभाव which are external indications of internal feelings—"स्तम्भः स्वेदोथ रोमाञ्चः स्वरभङ्गोथ वेपथुः। वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः"—Bharata.

Thus they are included within अनुभाव and are not treated separately (though some treat these separately); thus a sentiment made 'व्यक्त' by विभाव, अनुभाव and व्यभिचारिभाव is

transformed into a permanent state (as दधि is transformed from दुग्ध ) and is called a रस। It is not already before established and is being ventilated now, as pre-existing घट is being shown by a light.

In other words "when a permanent feeling is brought to a relishable condition by विभाव, अनुभाव and सञ्चारिभाव, it is called poetic sentiment (रस)—"विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वाद्यत्वं स्थायिभावो रसः स्मृतः—Dasarupa; "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"—नाट्यशास्त्र।

तदुक्तं लोचनकारैः—'रसाः प्रतीयन्ते इति तु ओदनंपचतीतिवत् व्यवहारः' इति। अत्र च रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेषु अस्थायित्वप्रतिपादनार्थम्। ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव। तदुक्तम्—"रसावस्थः परं भावः स्थायितां प्रतिपद्यते"।

Now the author has said that रस is रूपान्तरपरिणत like दधि from दुग्ध, so the usage "रसाः प्रतीयन्ते" is to be understood as like ओदनंपचति i.e., cooked ओदन is got from तण्डुल (cp "यथा पाकसम्बन्धेन ओदनरूपं प्राप्तः तण्डुल ओदनत्वेन व्यवह्रियते तथा प्रतीतिसम्बन्धेन रसरूपंप्राप्ता समाजिकवासना रसत्वेन व्यवह्रियते"। Lochanakara (author of the work ध्वन्यालोकलोचन) indeed has said this.

You have said that रति, हास too are स्थायिभाव, so the use of रति etc in your def. of रस suggests स्थायित्व of the रस, still

the use of स्थायीपद here suggests that रति etc even sometimes act as व्यभिचारिभाव in a separate रस ( रसान्तरेषुअस्थायित्वम् )। So also हास, क्रोध etc. are व्यभिचारिभाव with ref. to the स्थायिरस of शृङ्गार and वीर। So it is said that a भाव which is invariably seen all along in a रस ( रसावस्थः परं भावः = रसावस्थः एवभावः ) attains the state of स्थायीभाव, otherwise it not being invariably seen all along it is called व्यभिचारिभाव (cp. "रसेषु-अवश्यमवस्थानात् स्थायी उच्यते। अनावश्यकत्वे व्यभिचारी इत्यर्थः" )

[ N. B.—Sage Bharata says "विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" ; Hence now the question arises how a रस arises and culminates ( निष्पद्यते ) in other's minds. Here there are five views as regards रसनिष्पत्ति। Let us see it here for clarification of our readers—(a) "तत्र भट्टलोल्लटप्रभृतीनाम् एषः सिद्धान्तः—'स्थायिनां विभावेन उत्पाद्योत्पादकभावरूपात्, अनुभावेन गम्यगमकभावरूपात्, व्यभिचारिणा पोष्यपोषकभावरूपात् सम्बन्धात् रसस्य निष्पत्तिः उत्पत्तिः व्यक्तिः पुष्टिश्चेति। तथाहि ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनितः, उद्यानादिभिरुद्दीपनविभावैः उद्दीपितः, अनुभावैः कटाक्षभुजक्षेपणादिभिः प्रतीतियोग्यः कृतः, व्यभिचारिभिः उत्कण्ठादिभिः परिपोषितः रामादौ अनुकार्य्ये नाट्येन अभिनेये रसः। नटे तु तुल्यरूपतानुसन्धानवशात् आरोप्यमाणः सामाजिकानां चमत्कारहेतुः। यथा सर्पाभावेपि सर्पतयावलोकितायाः रज्जोरपि भयमुत्पद्यते तथा सीतादिविषयानुरागरूपा रामादिरतिरविद्यमानापि नर्तके अभिनयनैपुण्येन तस्मिन्स्थितेव प्रतीयमाना सहृदयहृदये चमत्कारमर्पयन्ती एव रसपदमीमधिरोहति"।

In other words BhattaLollata holds—that permanent sentiment of love etc, produced by generating causes, as

women, excited by exciting scenes of moon, garden etc, made cognisable by effects as sideglances embraces, and strengthened by attendant feelings as desire, become poetic sentiment of love etc, originally in Rama and others whose doings are represented now on the stage. It is subsequently attributed to the actor who imitates the character in form, dress and actions and becomes the source of delight to the audience. Acc. to this theory the रस found in the characters of Rama and others and attrituted to the actor ( नट ), charms the spectator, though not directly present at the time. (This is the मीमांसा view of the उत्पत्तिवादिन,—who hold रस is produced). Hence it may be called उत्पत्तिवाद ॥

But this theory is weak; for how can the spectator be charmed by a sentiment which does not exist in him ( "नेदं हृदयग्राहि। सामाजिकेषु रसनिष्पत्त्यभावे तत्र चमत्कारानुभवविरोधात्" )।

(b) Hence against this Srisankuka asserts—The sentiment of love etc, are inferred to exist in the actor through exciting causes, exhibited by him in his acting and being relished by the audience become poetic sentiments. (This is the Naiyayika view of अनुमितिवादिन् whohold—रस is inferred). Compare—

"यथा कुज्झटिकापातसङ्कुले देशे अविद्यमानस्यापि धूमस्याभिमानात् धूमनियतस्य धूमध्वजस्यानुमानम्। तथा नटेनैव 'ममैवैते विभावादयः' इति निपुणं प्रकटीकृतैः

तत्र अविद्यमानैरपि विभावादिभिः सन्निधता रतिः अनुमीयमानापि निजसौन्दर्यवशात् सामाजिकानाम् आस्वाद्यमानतया चमत्कृतिमावहन्ती रसतामेति इति रतेरनुमितिरिव रसनिष्पत्तिः" ॥

This may be called अनुमितिवाद।

This theory too is unacceptable, for it disregards the लोकप्रसिद्धप्रत्यक्षज्ञान that only gives charm and not its inference. (Compare "नेदमपि हृदयग्राहि। प्रत्यक्षमेव ज्ञानं चमत्कारजनकम्, नानुमित्यादिः इति लोकप्रसिद्धिमवधूय अन्यथाकल्पने मानाभावात्")।

(c) So against this Bhattanayka opines thus—रस cant be a matter of अनुमान i.e. cant be inferred as existing in the real character, or the actor or spectator ; the emotion etc of the real character being not present before the audience, it should be inferred as existing in another, nor can रस be produced ; for the causes are not real and so cant giverise to the real effect ; nor can it be suggested ; for it is only an established object that can be suggested ; and रस is never an already established object ("सिद्धस्य एव व्यङ्ग्यत्वात्, रसस्य चासिद्धत्वात्"—Pradipa). He thus refutes both उत्पत्ति and अनुमितिवाद discussed before ; व्यक्तिवाद i.e. रस is manifest due to sight of विभाव etc is also not liked by him. Acc. to भट्टनायक, रस is due to the relation of the enjoyed and the enjoyer ( भोज्यभोजकभावसम्बन्धात् रसनिष्पत्तिः )। He says that in काव्य etc words have 3 powers अभिधा, भावकत्व and भोजकत्व। अभिधा acc. to these भुक्तिवाद embraces अभिधा and लक्षणा as well :

भावकत्व means साधारणीकरण (generalisation). By the force of this power the विभाव etc and the स्थायिन् are understood in a general way without ref. to their specific properties. Thus for example the विभाव सीता etc is not taken as such, but in the general form of a कामिनी, and स्थायिन् i.e. Rama's love for her is taken as love of a नायक and नायिका। Then by the force of भोजकत्व power the स्थायिन् is enjoyed in a general form accompanied by विभाव etc in a general form. The enjoyment of रस now is of a diff. sort from that of wordly happiness. It is like the bliss arising from the सात्त्विकभावोदय in a person. According to this Sankhya doctrine happiness, misery, मोह—arise respectively from the attributes of सत्त्व, रजस् and तमस्। This is the भुक्तिवाद of the Sankhayas like भट्टनायक who hold that रस is thus to be enjoyed.

शब्दस्य अभिधाव्यापारवत् काव्यनाट्ययोस्तद्विलक्षणं भावकत्वभोजकत्वनामकं व्यापारद्वयमतिरिक्तमस्ति। काव्यार्थबोधोत्तोरमेव तत्र आद्येन भावकत्वव्यापारेण विभावादिरूपसीतादयो रामादिसम्बन्धिनी रतिश्च सीतात्वरामत्वसम्बन्धं समपहाय सामान्यतः कामिनीत्वरतित्वादिना उपस्थाप्यते। ततः अन्त्येन भोजकत्वव्यापारेण उक्तरीत्या साधारणीकृतविभावादिसङ्कृतेन सा रतिः सहृदयैरास्वाद्यते रतेरास्वाद एव रसनिष्पत्तिः।

This may be called भुक्तिवाद॥

This view is also not appealing for we do not see any authority for assuming the two powers of भावक and भोजक,

whereas these two may come within the purview of व्यञ्जनाव्यापार—compare "एतदपिनसम्यक्। व्यञ्जनाव्यापारेणैव गतार्थतया तदतिरिक्तव्यापारद्वयकल्पने मानाभावात्"।

(d) Hence against this, the Rhetoricians अभिनवगुप्त etc hold or explain रसनिष्पत्ति thus—

रस is suggested by the union of permanent feelings in a man with generating causes (विभाव etc) by the relation of the suggested and the suggestor. रसनिष्पत्ति is to be taken as रसाभिव्यक्ति। Love and other permanent sentiments frequently inferred from their causes in the world, remain in the hearts of the सहृदय as वासना। When a poem or drama is read or seen, these feelings while are in the वासना are suggested by the existing causes which cease to be called as specific causes but go by the general names of विभाव, अनुभाव and व्यभिचारिभाव i.e., these are taken in a general form. The स्थायिन् too is to be taken as referring not to a particular spectator but to spectators in general. Thus though really relished by a particular person, yet at the time of relishing it, he does not think that it is relished by him alone on account of the force of विभाव etc taken in a general form (साधारणीकरण) but feels that it is being relished by all persons having poetic sensibility. Thus relish constitutes what is called रस। The वैयाकरण, the मीमांसक the विरागयुक्त who have become inappreciative by

the constant study of vedas and thinking on Jnana and becoming disgusted with the world, have nosuch वासना and cannot relish रस।

The रस as said above, is suggested or relished by व्यञ्जना in the mind of the reader or the audience by विभाव etc understood in a general form. It neither comes under the domain of अभिधा, nor of तात्पर्य्याख्यवृत्ति, nor of लक्षणा, nor of प्रत्यक्ष, nor of अनुमान, nor of स्मरण। Though रस requires विभाव, अनुभाव and व्यभिचारिभाव and cant exist without these, still is not regarded as their effect nor as separate from these; Thus it is अलौकिक and अज्ञाप्य; it is चर्व्यमाण, ब्रह्मास्वादसहोदर, wherein contemplation of other things is lost—वेद्यान्तरसम्पर्कशून्य;—it is वासनारूपेण सहृदये सूक्ष्मतयास्थित: अधुना उद्रिक्त: अभिव्यक्तश्च। It is then a universal bliss enjoyed as such and manifests itself through व्यञ्जना by consideration of विभाव etc and by breaking our आनन्दावरक वस्तु। Compare—

"स्थायिनां विभावादिभि: समं व्यङ्ग्यव्यञ्जकभावरूपात् विभावादीनां च परस्परम् संयोगात् मीलनात् रसस्य निष्पत्ति: अभिव्यक्ति···प्रथमं तावत् काव्यपदेभ्य: तत्तदर्थोपस्थिति:, ततो यथोपस्थित-विभावादिगोचरो वाक्यार्थबोध:, ततो रत्यादिवासनायुत: सहृदयस्य साधारण्येन विभावादिबोध: तेन च साधारण्येनैव विभावादिसम्वलित रत्यवच्छिन्नचिदानन्दावरणभङ्गात् प्रकाशमानानन्द चिद्विषये विभावादिसंवलित: स्थायी रत्यादिको रस इति"॥

This may be called अभिव्यक्तिवाद।

This view is accepted by almost all rhetoricians later than अभिनवगुप्त।

(e) The followers of नव्यन्याय such rhetoricians as जगन्नाथपण्डित etc hold the above view (a bit modified slightly modified form of Abhinavagupta's अभिव्यक्तिवाद) and say we are to assimilate the same due to removal of आवरण। (See Intro.)

Thus the opinion of नव्यालङ्कारिक is given below for emphasis—

"नव्याः तु 'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण रामादौ सीतादिरतौ गृहीतायाम्, अनन्तरञ्च सहृदयतोल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितरामत्वाद्यवच्छादिते स्वात्मनि अज्ञानावच्छिन्ने, शुक्तिकाशकले इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः सीतादिविषयकरत्यादिरेव रस इति" i.e, रस arises in our congenial सहृदय mind and we take सीतादिविषयकरति itself as one real रस like शुक्तिकायां रजतबोध।

The Indian or our Aryan culture ("Samskriti" or the "self-culture") as got or revealed in our Rigveda, upanishads etc (as already hinted in Intro.) teaches us that the manifold came out of one Eternal energy (Brahman or Bhuman) due to his own will-power (मायाशक्ति or इच्छाशक्ति or प्रकृति as it is called) [compare "एकं वा इदं विबभूव सर्वम्" (one became many), "इन्द्रो मायाभिः पुरुरूप ईयते" (The universal self Paramatma or Indra came out as many due to his Mayic power), "पतङ्गमक्त-

मसुरस्यमायया" ( the univese is pervaded over by magic power of the supreme one ), "महद्देवानामसुरत्वमेकम् ( the supreme one is the one root of all devas ) in Rigveda, "बहुस्याम् प्रजायेय" ( I will become many ), "एको देवोऽजायमानो बहुधा विजायते" ( one ultimate soul or one god became many though not actually born ) in upanishads etc ; His will for such manifold creation was to see the "Lila" or sport thereof ( लीलाकैवल्यात् ), for He did not revel alone ( "स एकाकी नारमत ) ; He is आनन्दमय, he is रस, so everything born out of him lives on Ananda, hankers for Ananda and rushes for Ananda ; so come the creation of sound (from Avyata Nada or omkara to vyakta sabda ), from sound come shastras, kavyas and kalas or Arts etc. All this is for elevation of His created beings—for their uplift and self-culture and bliss. Hence the creation of varieties of रस too ; and there having this underlying unity due to eternal रस in the soul of all, all रस gives us Ananda. Hence रस is आनन्दस्वरूप due to this Samskara and the one underlying principle. It thus becomes ( आस्वाद्य-चैव्य ) due to our vasana, samskara, natural inherent inclination or propensity, Hence all रस is ब्रह्मानन्दसहोदर ( वेद्यान्तरसम्पर्क-

when fully enjoyed. We get thus रसास्वाद when causes are present and our चित् ( consciousness ) is sympathetic and free to imbibe or assimilate the same due to the removal of आवरण ॥

In other words, Jiva's natural tendency or his Samskara or Vasana to be united with the Paramatma from whom he has sprung up, makes him engaged in equipping him bodily, mentally and spiritually, and make a harmonious culture of these with that end in view :—he becomes engrossed in all his favourite ideas or sentiments—he also cant override or surpass all these like a bird who cant override his shadow—he is one with what gives pleasure—he forgets his separate existence then ( he is वेद्यान्तर सम्पर्कशून्य ), he is one with the pleasure-scenes of sentiment before him ; bar of country time and object, is lost or merged within this pleasurable scene or sentiment, his चित् ( consciousness ) is भग्नावरणा ( made open ) —he enjoys and revels in this or such scenes or sentiment and takes the supporting event or cause as not a facsimile but a real one—रजते शुक्तिबोधवत् or रज्जौ सर्पबोधवत्—thus there is रसनिष्पत्ति in him due to विभाव, अनुभाव and सञ्चारिभाव of events or cause etc that go to awake the sentiment or idea latent in him. Thus we see Abhinavagupta's theory of रसनिष्पत्ति should be modified with रसनिष्पत्ति view of Jagannath Pandit as revealed in his Rasagangadhara and briefly stated herein—रससंस्कार or भावनाविशेष is latent in everyone, becomes patent अभिव्यक्त through causes ; one forgets everything his individuality etc. this becomes

not of a particular one but a universal one ; one becomes merged therein, there he takes this as the original real one due to भग्नावरणा चित् all along like सर्पभ्रम on रज्जु or सत्यभ्रम on this मायामय जगत्—this may be hence called as अध्यासवाद in the manifestation of रस। Worldly रस becomes then not a facsimile as in अभिव्यक्तिवाद, but an original real रस—one is ascribed on the other and regarded and enjoyed as such ; hence we call this as अध्यासवाद in रसनिष्पत्ति। Then there is our तादात्म्यवाद when all is one.

( See Intro. P. XXXIV. etc also )

Comp.—"नव्यास्तु काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण रामादौ सीतादिरतौ गृहीतायाम्, अनन्तरञ्च सहृदयतयोल्लासितस्य भावनाविशेषदोषरूपस्य महिम्ना कल्पितरामत्वाद्यवच्छादिते स्वात्मनि अज्ञानावच्छिन्ने शुक्तिकाशकले इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः सीतादिविषयकरत्यादिरेव रसः। अयञ्च कार्यो दोषविशेषस्य नाश्यश्च तदुत्तरक्षणेन भेदाग्रहात्, सुखव्यपदेश्यश्चभवति इत्येतत् सर्वं पण्डितराजेन विशदीकृतम्"।

अस्य ( रसस्य ) स्वरूपकथनगर्भः आस्वादप्रकारः कथ्यते—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।<br>
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥२॥<br>
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।<br>
स्वाकारवत्अभिन्नत्वे नायमास्वाद्यते रसः ॥३॥

रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते।

इत्युक्तप्रकारो वाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः

सत्त्वम्। तस्योद्रेको रजस्तमसो अभिभूयाविर्भावः। तत्र (सत्त्वोद्रेके) हेतुः तथाविधालौकिक—काव्यार्थपरिशीलनम्। अखण्ड इत्येक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्रहेतुं वक्ष्यामः—स्वप्रकाशत्वादि अपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत्प्राणत्वं च अस्मद्वृद्धप्रपितामहसहृदयगोष्ठी-गरिष्ठ-कविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्। तदाह धर्मदत्तः स्वग्रन्थे—

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।
तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।
तस्मादद्भुतमेवाह कृती नारायणो रसम्" ॥ इति।

केश्चिदिति प्राक्तनपुण्यशालिभिः। यदुक्तम्—"पुण्यवन्तः प्रमिण्वन्ति (आस्वादयन्ति) योगिवत् रससन्ततिम्"।

Now our author is explaining the mode of relishing a Rasa (रस) by way of giving its special or distinguishing characteristics (आस्वादनमुखेन रसस्य स्वरूपम् प्रकाशयति)। रस is relished (as declared by some प्रमातृ or relishers) by the mind freed of रजस् and तमस् and it is diff. from wordly enjoyments and is like the unending self-illuminating bliss of the meditation of the supreme Being (cp—चर्व्यमाणस्य अलौकिकानन्दमयस्य स्वसंवेदनसिद्धत्वात्), it thus absorbs the mind completely and nothing else is cognised at the time it

is being relished ( वेद्यान्तरस्पर्शशून्य and ब्रह्मास्वादसहोदर ); it is something extraordinary and an internal matter surpassing other wordly things and is thus not different from one's self at the time of relishment; it draws in the mind from outward sensual objects ( बाह्यमेयस्य i.e. बाह्यवस्तुनः विमुखतापादकः ); so it gives rise to सत्त्व or a serene mental condition due to studying (परिशीलन) of some extra ordinary काव्यवस्तु। It is अखण्डानन्द due to diclosure of विभाव and रति etc—though रस is constituted of विभाव etc, the whole appears as रस, and then विभाव are not experienced separately; and being like चिन्मय is चमत्कार and expands our mentality. Thus धर्मदत्त is his own book says—"the essence in a रस is चमत्कारत्व that is being enjoyed always and for this it is something अद्भुत or supernatural—so the head of our ancestral Pandits नारायण opines that रस is something अद्भुत। Thus it is said elsewhere that the meritorious alone enjoy रस ( due to विभाव etc ) like yogins enjoying ब्रह्मानन्द within'; Kamalakara too hence says of रस as पानकरसन्यायेन चर्व्यमाणैकप्राणः।

मित-टीका—सुगमा ॥ "सकलसहृदयहृदयसंवेदनसाक्षिकोऽयं रसप्रतीतिः"। "सकलसहृदयसंवादभाजा प्रमात्रा गोचरीकृतः स्थायी" इति मम्मटः। "अतः रसिका एव रसास्वादे योग्याः न तु विरक्तादयः" इति कमलाकरः।

यद्यपि 'स्वादः काव्यार्थसंभेदात् आत्मानन्दसमुद्भवः' इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वम्, तथापि 'रसः स्वाद्यते'

इति काल्पनिकं भेदमुररीकृत्य कर्मकर्त्तरि वा प्रयोगः। तदुक्तम्—'स्वाद्यमानतामात्रसारत्वात् प्रकाशशरीरात् अनन्य एव हि रसः' इति। एवमन्यत्रापि एवं विधस्थलेषु उपचारेण प्रयोगोज्ञेयः।

Thus though रस is स्वादमात्र or relishment due to mixture of विभाव etc (काव्यार्थसंभेदात्), it is purely due to internal आनन्द and so रस is not something other than आस्वादन (आस्वादनात् न अतिरिक्तः), still we say "रसः आस्वाद्यते" by making an imaginary damarcation between रस and its आस्वाद (and therefore स्वाद्यते here is to be taken as कर्मकर्तृवाच्यप्रयोग)। Hence it is said रस's essence being its स्वाद्यमानता or आस्वादनपरता it is not diff. (अनन्य) from some संवित् or ज्ञान and has no other external manifestation. Thus the usages like 'रसः आस्वाद्यते etc, is to be understood in a secondary sense or उपचार; उपचार or transference is to be applied in such cases.

नित—। ज्ञानरूपतामापन्न एव रत्यादिः सामाजिकानाम् आनन्दचमत्कार-ज्ञानोपादेयत्वात् रस इति उच्यते॥ एवञ्च तादृशज्ञानानन्तरं रसास्वादः कथं जायताम्, उपायादिविभावादेः तदा अभावात् इत्यभिप्रायेण कथयति ग्रन्थकृत्—

नन्वेतावता रसस्य अज्ञेयत्वमुक्तं (स्वप्रकाशस्य अनुत्पत्त्या अज्ञेयत्वं) भवति। व्यञ्जनायाश्च ज्ञानविशेषत्वात् द्वयोरैक्य-मापतितम्। ततश्च (द्वयोरैक्यापातात्)—

'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्॥'—

इत्युक्तदिशा घटप्रदीपवत् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यता इति चेत्, सत्यमुक्तम् । अत एवाहुः—'विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चित् व्यापारः' इति ।

अतएव हि रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशा इति । अभिधादिविलक्षणव्यापारमात्रप्रसाधनग्रहिलैः अस्माभिः रसादीनां व्यङ्ग्यत्वमुक्तं भवति इति ।

Now then, when रस is relishment due to विभाव etc. during relishment of this रस due to सामाजिक-वासनासाक्षात्कार (as in अभिनवगुप्त's view) the means (causes) of विभाव etc are not present to the आस्वादनशील mind, Rasa then remains something अज्ञेय inexplicable at that stage and is स्वप्रकाशक ; it is not उत्पाद्यमान but व्यङ्ग्य only and व्यञ्जनाव्यापार is a kind of ज्ञान (as seen before)—आस्वादनविलक्षणज्ञानरूपत्वात् ; so now due to व्यङ्ग्यव्यञ्जकभावसम्बन्ध, रस and व्यञ्जना are viewed as one and the same, whereas व्यङ्ग्य and व्यञ्जक is possible of two distinct matters.

If you urgue thus—it is true no doubt ; But it is said—in case of an established fact ( सिद्ध अर्थ ), व्यञ्जक is that which causes suggestion of another व्यङ्ग्य ( अन्यधीहेतु ) by its force, as lamp shows pot ( घट ) already existing, otherwise there will be no difference between व्यञ्जक and ज्ञापक or कारक। So in this way व्यञ्जना and व्यङ्ग्यरस are taken as distinct, still remember that रस is something to be

relished—a matter of relishment and is somewhat other than ( विलक्षण from ) उत्पत्ति or ज्ञप्ति। So also व्यञ्जना and रस are not one and the same—they are viewed as separate; So the differential usages and epithets with regard so रस is—it is रसन, आस्वादन and चमत्करण, and its mode of gaining or getting is व्यञ्जना only that is different from अभिधा, लक्षणा तात्पर्य—it is अभिधादिविलक्षणव्यापारमात्रगम्य; hence व्यङ्ग्यत्व of रस is stated by us ( रसस्य व्यञ्जनाजन्यबोधविषयत्वमेव )।

मित—। 'ननु एतावता' विभावादिसमुदायप्रकारस्य रसत्वाङ्गीकारेण पश्चात् आस्वादनकाले विभावादेः उपायानामभावात्, रसस्य स्वप्रकाशत्व ( व्यङ्ग्यत्वेन ) अनुत्पत्त्या एव अज्ञेयत्वं व्यञ्जनागम्यत्वं वा स्यात्। व्यञ्जनया एव रसास्वादो जायते इति व्यञ्जनाया ज्ञानविशेषत्वात् विशिष्टवैशिष्ट्यज्ञानरूपत्वाच्चद्वयोः व्यङ्ग्यव्यञ्जकयोः ऐक्यमापतितम्, कथं तदा रसस्य व्यङ्ग्यता? द्वयोः पार्थक्ये एव तत्सम्भवात्। किन्तु सिद्धे अर्थे, स्वज्ञानेन अन्यधीहेतुव्यङ्ग्यप्रतीतिकरः व्यञ्जकः, यथा दीपः घटादिकं प्रकाशयति। एवं घटप्रदीपवत् व्यञ्जनाव्यङ्ग्ययोः पार्थक्ये सति 'रसस्य व्यङ्ग्यतास्ति एव'। अत एवाह अभिनवगुप्ताचार्य्यं—पक्षपातिभिः—

"विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्व्यापारः"। [ अत्रान्वयः— 'सिद्ध अर्थे स्वज्ञानेन अन्यधीहेतुः' ( व्यङ्ग्यप्रतीतिकरः ) एव व्यञ्जकः, दीपो यथा। अन्यथाभावे ( असिद्धार्थज्ञापकत्वे सति ) अस्य ( ज्ञापकस्य ) कारकात् ( जनकात्= जनको हि कार्य्यमुत्पाद्य प्रकाशयति ) कः विशेषः स्यात् ]॥

ततश्च आचार्य्याभिनवगुप्तमतानुसारेण रसास्वादोपायमाह—रसनास्वादन-चमत्करणादयो हि रसस्य विलक्षणाः ( करणव्यञ्जनादिभिन्नाः ) एव व्यपदेशाः ( व्यवहाराः )। तथा रससाक्षात्कारो वासनांशे लौकिकः रत्याद्यंशे पुनः प्रकाशनत्वात् अलौकिक एव। "प्रथमं नाट्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावयोरुपस्थितिः।

सा च दोषतया अपि वक्ष्यते। ततो वक्ष्यमाणसाधारणीकरणव्यापारेण सीतादयो मम रामस्य वा इति विभावादिचतुष्टये साधारण्यप्रत्ययः अनन्तरञ्च व्यञ्जनया रससमानाकारः प्रत्ययः तदनु तत्सहकृतेन स्वादनाख्यव्यापारेण 'रामोऽहं सीताविषयकरतिमान्' इत्याद्यकारकस्ववासनायां रत्याद्यभेदं स्वस्मिन् नायकाभेदमवगाहमानः साक्षात्कारः सम्पद्यते"। एवम् अभिधादिविलक्षणव्यञ्जनामात्रवेद्यः रसः। ततश्च 'अस्य व्यङ्ग्यत्वमुक्तं भवति' इति।

ननु तर्हि करुणादीनां रसानां दुःखमयत्वात् रसत्वं न स्यात्—इत्युच्यते—

करुणादावपि रसे जायते यत् परं सुखम् ॥२१॥
सचेतसामनुभवः प्रमाणं तत्र केवलम्।

आदिशब्दात् वीभत्सभयानकादयः।

तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—

किञ्चतेषु यदा दुःखं न कोपि स्यात् तदुन्मुखः ॥२५॥

न हि कश्चित् सचेतन आत्मनो दुःखाय प्रवर्त्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव। उपपत्त्यन्तरमाह—

तथा रामायणादीनां भविता दुःखहेतुता॥ करुणरसस्य दुःखहेतुत्वे करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुताप्रसङ्गः स्यात्।

Now you have said that रस is आस्वादन (relishment) चमत्कारण (delight producer) etc; then we say—the emotions of करुण, भयानक and वीभत्स etc producing sorrow

( एषां दुःखमयत्वात् ) should not be termed as रस ( sentiment ); but this is not a sound argument, for in the sentiments of करुण etc there is द्रवीभाव ( suffusion of feeling ) and सुखानुभव ( experiencing of great delight thereby ) and the experience of the सहृदय or सचेतस् is the authority ( प्रमाण ) on this point ; still again to put a stop to the argumentative mouths of the असहृदय we further add—if in करुण etc there is sorrow only then none would be eager therefor ; no sympathetic heart can move towards his own sorrow ; and as in करुणरस etc, almost everyone inclines attentively then surely there is delight therein ; another argument in favour of this is—if करुणरस is दुःखहेतु then Books like Ramayana etc, will be a source or hot bed of दुःख ; for it is करुणरसप्रधान ; compare—

"ननु रतेरस्तु नाम सुखविशेषजनकता, करुणादिषु तु स्थायिनः शोकादेर्दुःखजनकतया कथं सहृदयाह्लादजनकत्वम् ?...अत्राह—श्रृङ्गाररसप्रधानकाव्येभ्यइव करुणरसप्रधानकाव्येभ्योपि...लोकोत्तरकाव्यव्यापारस्य इव आह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम्...अयं "हि लोकोत्तरस्य काव्यव्यापारस्य महिमा यत्प्रयोज्या अरमणीयाअपि शोकादयः पदार्था आह्लादमलौकिकं जनयति"—Rasagangadhara.

ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—

हेतुत्वं शोकहर्षादेर्गतेभ्यः लोकसंश्रयात् ॥२८॥
शोकहर्षादयो लोके जायन्तां नाम लौकिकाः ।
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात् ॥२९॥

सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपि इति का क्षतिः ॥

"ये खलु वनवासादयो लोके दुःखकारणानि" इत्युच्यन्ते त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यतां विहाय अलौकिकविभावशब्दवाच्यत्वं भजन्ते। तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च 'लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते' इति लोके एव प्रतिनियमः। काव्ये पुनः 'सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते' इति नियमान्न कश्चित् दोषः।

Now the question arises—how can there be advent of delight from causes that give rise to sorrow only? The answer on the point is—in outside world, it is natural, that delight (हर्ष) or sorrow (शोक) that are causes (हेतुत्वं गत) of such experiences will thus by nature produce हर्ष and शोक; and as such वनवास (banishment to forests) etc are in wordly ways causes of grief, but become in काव्य or नाट्य in connection with supernatural producers of रस (अलौकिकविभावादिव्यापारात्), not causes of grief but attain the status of अलौकिकविभाव, and thus these cause delight then; and hence in amour bite by teeth etc causes delight only. Hence we also repeat that from worldly causes of शोक or हर्ष, शोक or हर्ष only set in in nature—this is प्रकृति or natural law or law in nature (प्रतिनियम)। But in काव्य etc, from all विभाव etc, some delightful

experiences only follow; hence in काव्य etc सुख comes in from दुःखकारण too; and we do not see any क्षति or दोष in this.

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शन-श्रवणाभ्याम् अश्रुपातादयो जायन्ते इत्युच्यते—

अश्रुपातादयस्तद्वत् द्रुतत्वाच्चेतसो मताः ॥२८॥

Then in accepting करुण etc as रस, and in काव्य etc करुणादि कारण being delight—causing विभाव only, how अश्रुपात etc can take place from sight or reading of narration of Harishchandra in काव्य or नाट्य; on this our author says—अश्रुपात in such cases is due to overpowering or melting of the heart or mentality (चेतसः द्रुतत्वात् i. e., हर्षेण गलितप्रायत्वात्) due to some supernatural or delightful experiences.

तर्हि कथं काव्यतः सर्वेषामोदृशो रसाभिव्यक्तिर्नजायते इत्यत आह—

न जायते तदास्वादो विना रत्यादिवासनाम् ॥ वासना च इदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यद्याद्या न स्यात् (इदानीन्तनी न स्यात्) तदा श्रोत्रियजरन्मीमांसकादीनामपि सा (रत्यादिः स्यात्) स्यात्। यदि द्वितीया न स्यात् तदा यद्रागिणामपि केषाञ्चित् रसोद्बोधो न दृश्यते, तन्न स्यात्। उक्तं च धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः ॥ इति ।

Why then from काव्य, such manifestation of sentiment ( रसाभिव्यक्ति ) is not seen in one and all ? On this the author says that रसास्वाद does not arise in one who has no impressions ( वासना ) of the sentiments of love ( रति ) etc ( रत्यादिवासनाम् विना रसास्वादः न जायते ) ।

Again this रत्यादिवासना is both present-life वासना or prior-life वासना (इदानीन्तनी वासना तथा प्राक्तनी वासना रसस्यास्वादहेतुः), and both of these together constitute or cause रसास्वाद । Thus one who has no इदानीन्तनी वासना, as a vedic scholar or an old Mimamsaka has not this sentiment of रति etc, and again of one who has no प्राक्तनी वासना then too रसास्वाद will not arise ; thus sometimes even a रागिन् ( or भोगिन् ) is seen not to have such रसास्वाद due to want of his प्राक्तनी वासना । Thus Dharmadatta says in his अलङ्कारग्रन्थ—रसास्वाद is seen in audience or reader who is full of all वासना ; and those without such वासना are like wood or floor or stone or statues in the andience hall ( रङ्गान्तः or रङ्गमध्ये ) ।

ननु कथं रामादिरत्याद्युद्बोधकारणैः सामाजिकरत्याद्युद्बोध इत्युच्यते—

व्यापारोस्ति विभावादेर्नाम्ना साधारणीकृतिः ॥९॥
तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ।
प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥१०॥

Now again the question is—how the sentiment of Love ( रति ) etc, can arise in the minds of the audience at the sight of the causes of the advent of the sentiment of Love etc, with reference to Rama and sita etc ; on this our author following Abhinavagupta says—there is a व्यापार ( natural tendency ) by which the विभाव etc or exciting causes etc, with ref to राम or any individual, become विभाव etc in general of all persons seeing this ; this is called साधारणीकरण i. e., making one's special विभाव etc as general to all ( due to वासना latent in all persons ) ; and by force or power of it the relisher ( प्रमाता ) regards the crossing of sea ( पायोधिप्लवन ) etc of Hanumat or Rama as of his own self, and enjoys रस in his own mind— ( 'तत् प्रभावेण' विभावादेः साधारणीकरणेन 'यस्य' रामस्य 'असत्पाथोधिप्लवनादयः' 'प्रमाता' आस्वादयिता सामाजिकः 'तदभेदेन' रामाभेदेन 'स्वात्मानं' स्वमेव प्रतिपद्यते स्वीकरोति ततश्च स्वादनाख्यव्यापारेण स्ववासना एव सामाजिकैः आस्वाद्यते इति भावः )।

एवं नायकसामाजिकाभेदबोधमुत्पाद्य वासनोत्साहाद्यभेदबोधमुपपादयितुमाह—

**ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादौ उत्साहोद्बोधः इत्युच्यते—**

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति ॥११॥**

How again enterprise is to be seen in crossing the sea, killing the enemy etc, in every audinence or person ? On

this point our author says—that the real advent of उत्साह (enterprise) etc is due to taking Rama's समुद्रलङ्घन as of the seer's own due to साधारण्याभिमान (रामस्य समुद्रलङ्घनादयः ममापि इति साधारण्याग्रहः or साधारण्याभिमानः), and in this way समुद्रलङ्घन etc will not be faulty in men or audience (who is possessed with the वीररस of राम)।

एवं स्थायिभावानां साधारण्यप्रतीतौ प्रतिबन्धकाभावमुपपादयितुमाह—

रत्यादयोपि साधारण्येनैव प्रतीयन्ते इत्याह—

साधारण्येन रत्यादिरपि तद्वत् प्रतीयते।

रत्यादिरपि स्वात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडातङ्कादिर्भवेत्। परगतत्वेन (नायकमात्रसम्बन्धत्वेन) तु अरस्यतापातः।

Similarly स्थायीभाव of रति etc appear relishable due to this साधारणीकरण व्यापार। On the other hand—If रति etc seen to be of the individual (स्वात्मगत) alone (and there is no साधारणीकरण) then लज्जा and शङ्का (आतङ्क) will arise in the mind, if it is taken as of others (परगत) or नायक only, then its sight will bring disgust and non-relishment (अरस्यता)

मित—। एतदुपकरणं सर्वं नैव मम न चापि नायकस्य, किन्तु साधारण्यप्रतीतिः तद्व्यापारप्रभावात् "सर्वस्यैव" इति साधारणीकरणेन न दुष्यति, रसोद्बोधश्च जायते।

(एवं) विभावादयोपि साधारण्येन प्रतीयन्ते इत्याह—

परस्य न परस्येति ममेति न ममेति च ॥१२॥

तदास्वादे विभावादेः परिच्छेदो न विद्यते।

Thus विभाव, अनुभाव and व्यभिचारिभाव of राम etc appear to

the audience, as of all in general ( साधारण्यप्रतीति ); So the विभाव etc though of पर or नायक is not taken as such (न परस्य) then again though of self is not taken as such ( न स्व ), so in रसास्वाद these is no differentiation ( परिच्छेद ) of विभाव etc (विभाव etc being taken as united identical and general as in a रस ; विभावादीनामिव मिलितानाम् रसस्वरूपत्वात् )।

लौकिकानामपि विभावादीनाम् अलौकिकत्वसाधनोपायं साधयितुमाशङ्कते—

ननु तथापि कथमलौकिकत्वमेतेषां विभावादीनाम् इत्युच्यते—

विभावनादिव्यापारमलौकिकमुपेयुषाम् ॥१३॥
अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ।

आदिशब्दात् अनुभावनसञ्चारणे (i. e. अनुभावव्यभिचारिभावौ इत्यर्थः) । तत्र विभावनं रत्यादेः विशेषेण आस्वादाङ्कुरणयोग्यतानयनम् । अनुभावनम् एवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् ( उत्पादनम् ) ; सञ्चारणं तथाभूतस्यैव तस्य सम्यक् चारणम् ( आस्वादनपात्रीकरणम् इत्यर्थः )।

रत्यादि and विभावादि are seen in the world and in human beings—so they are लौकिक ; how do you then term रत्यादि रस etc as अलौकिक ? The fact is, the विभाव etc constituting रति etc, attaining the status of रस, create inconceivable relishment and delight ( where nothing else exists ) and hence become अलौकिक i.e, something supernatural due to supernatual delight produced by the विभाव or

exciting cause of रति conduce to the special fitness for the production of relishment, and then अनुभाव i.e, outward manifestations of such रति etc produce (induce) रस, and सञ्चारिभाव or व्यभिचारिभाव concomitant feelings etc bring to relishment the रस that is thus produced.

विभावादीनां यथासंख्यं कारणकार्य्यसहकारित्वे कथं त्रयाणामिव रसोद्बोधे कारणत्वम् ? इत्युच्यते—

कारणकार्य्यसञ्चारिरूपा अपि हि लोकत: ॥१४॥
रसोद्बोधे विभावाद्या: कारणान्येव मता: ।

Thus we see विभाव, अनुभाव and व्यभिचारि or सञ्चारिभाव, respectively and by gradual steps become cause effect and concomitants in the production of रस (cp—"विभावा कारणानि । अनुभावा: कार्याणि । सञ्चारिण: सहकारिण: इति क्रम: ।"), then why do you say all these as कारण of रस, indeed सञ्चारिभाव are कार्य्यविशेष (special effects) of रत्यादि etc ; on this the author says—though these are (as seen before) respectively कारण, कार्य्य and सञ्चारि or सहकारि in the worldly scrutiny, still विभाव etc with regard to the production of रस are all regarded as कारण ("ते कारणानि" एव मता:) being connected with the many कारण and being causes in a general way—(कारणमात्रपरत्व) for रसद्बोध and रसास्वाद ।

Compare—"ननु 'विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्ति:' इति भरतमुनिवचनात् विभावादीनां त्रयाणामेव कारणत्वम् वाच्यम् । तथा सति

'कारणानि एव' इति भवदुक्तबहुवचनम् अयुक्तम्। एतादृशस्थले एकवचनस्यैव युक्तत्वात्, दण्डारणिमणिन्यायेन प्रत्येकं कारणताप्रत्ययप्रसङ्गात्। अतएव काव्यप्रकाशे—'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे' इत्यत्र 'त्रयः समुदिता हेतुः न तु हेतवः' इत्युक्तम्? एतत् सत्यम्। किन्तु स्थूण—कारणपदस्य एकधर्मावच्छिन्नकार्य्यतानिरूपितकारणतापरत्वे ह्येकवचनम्। कारणता-मात्रपरत्वे तु तादृशस्थलेऽपि बहुवचनं साधु। प्रकृते रत्यादेः कार्य्यभूतयोः अनुभाव-व्यभिचारिभावयोः रसरूपतोत्पत्तौ कारणत्वमिति कारणतामात्रे तात्पर्य्यम्"।

अधुना रसंप्रति विभावादीनां व्यञ्जनाजन्यैकज्ञानविषयत्वे सत्येव कारणत्वम् उपपादयितुमाह—

**ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते—**

**प्रतीयमानः प्रथमं प्रत्येकं हेतु रुच्यते ॥१५॥**

**ततः सम्मिलितः सर्वो विभावादिः सचेतसाम्।**

**प्रपाणकरसन्यायात् चर्व्यमाणो रसो भवेत् ॥१६॥**

**यथा खण्डमरिचादीनां सम्मिलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे सञ्जायते, विभावादिसम्मिलनादिहापि तथा इत्यर्थः।**

In other words—the विभाव, अनुभाव and व्यभिचारिभाव all together constitute the cause of रस due to व्यञ्जना; hence they are all कारण—their कारणत्व results in व्यञ्जनाजन्यज्ञान, and this ज्ञान gives one रसास्वाद, hence रसास्वादे there is in the late stage one sensation (एकः प्रतिभासः) only। In fact, though all the three, e. g. विभाव अनुभाव and व्यभिचारिभाव as they appear before us, one each regarded as कारण, still to

the sympathatic these combined together produce one sensation of रस which being relished on (चर्व्यमाण) is termed as रस and produce some अलौकिक आस्वाद like fermented juice or drink (पानकरस) of molass, pepper sugarcane, camphor etc though mixed together producing one indescribable and wonderful taste.

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसः तत् कथं तेषामेकस्य द्वयोर्वा सद्भावेपि स स्यात्? इत्युच्यते—

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसमाक्षेपे तथा दोषो न विद्यते ॥१७॥

अन्यसमाक्षेपश्च प्रकरणादिवशात् ('प्रकरणादिवशात्' प्रकृतवस्तुवशात् 'अन्यसमाक्षेपः' व्यञ्जनया अन्यस्य अनुक्तस्य बोधः स्यात्)।

If विभाव and अनुभाव and व्यभिचारिभाव all the three being combined (मिलित) produce रस, then how the same रस arises with the presence of one or two of these; on this it is said-that if there is presence of two or one of these विभाव etc, then through व्यञ्जना others that are not mentioned are suggested (अन्यसमाक्षेप) quickly and रस arises—and there is thus no inconsistency in this; and this अन्यसमाक्षेप due to व्यञ्जना is through प्रकरण or matter on hand and the context. The example on this point is given below—

यथा—

"दीर्घाक्षं शरदिन्दुकान्ति वदनं, बाहू नतावंसयोः,
संक्षिप्तं निविड़ोन्नतस्तनमुरः, पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितो, नितम्बि जघनं, पादावुदग्राङ्गुली,
छन्दोनर्त्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः॥

अत्र मालविकामभिलषतः अग्निमित्रस्य मालविकारूप-विभावमात्रवर्णनेपि सञ्चारिणाम् औत्सुक्यादीनामनुभावानां च नयनविस्फारादीनाम् औचित्यादेवाक्षेपः। एवमन्याक्षेपेपि ज्ञेयम्॥ [ औचित्यात् = वाच्यस्य विभावस्य वैशिष्ट्यात् ]

In the above sloka "दीर्घाक्षं शरदिन्दुकान्ति वदनम्" etc, of Malavikagnimitra, Agnimitra desires to have malavika as his own। Still from this विभाववर्णन only [ e.g. दीर्घाक्षवदन, नतबाहु, संक्षिप्त उरः, प्रमृष्ट ( लिप्त ) पार्श्व"; construe—मनसः नर्त्तयितुः ( कामस्य ) यथा छन्दः तथा अस्यावपुः सृष्टम् ] the सञ्चारिभाव of his औत्सुक्य etc and the अनुभाव of dilation of eyes ( showing eagerness ) are suggested and thus these three constitute शृङ्गार रस here. Such are other examples here.

अनुकार्य्यगतोरस ( अनुकार्य्यो नायकः, तन्निष्ठः रसः ) इति वदतः ( भट्टलोल्लटादीन् ) प्रति आह—

पारिमित्यात् लौकिकत्वात् सान्तरायतया तथा।
अनुकार्य्यस्य रत्यादेः तद्बोधो न रसो भवेत्॥१८॥

With regard to Bhattalollata etc that maintain that

रस is with reference to अनुकार्य्य or नायक or the hero, we say that it is not right ; if रत्यादि रस is only नायकमात्रगत or नायकनिष्ट, then it is owing to पारिमित्य or meagreness of expansion (being limited), and being worldly only, and also it having no consistency with the fact of hearing or seeing काव्य or नाटक on a stage ( सान्तरायतया नाट्यकाव्यदर्शनश्रवणप्रतिकूलतया ) should not be termed as रस which is to be relished by all the audience.

सीतादिदर्शनादिजो रामादिरत्युद्बोधो हि परिमितः लौकिकः नाट्यकाव्यदर्शनादेः सान्तरायश्च । तस्मात् ( पारिमित्यादित्रयसम्बन्धात् ) कथं रसरूपतामियात् । रसस्य एतत्त्रितयविलक्षणधर्मकत्वात् ।

Thus the advent of रति in Rama etc due to the sight of Sita etc being परिमित or measered or limited in one place, being an worldly affair and having no correspondence with the sight etc of नाट्य or काव्य, cannot attain the state of रस whose characteristics is different from these three signs and which as 'the derivation of the word suggests should be relished by all ( रस्यते आस्वाद्यते सर्वैः यः स रसः ) ।

अनुकर्त्तृगतत्वं तस्य निरस्यति ( तस्य रसस्य अनुकर्त्तृगतत्वं नटवृत्तित्वम् निरस्यति । एतच्च श्रीशङ्कुकादीनां मतम् )—

शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम् ।
दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत् ॥१८॥

किञ्च—काव्यार्थभावनेनायमपि सभ्यपदास्पदम् ॥

यदि पुनर्नटोपि काव्यार्थभावनया रामादिस्वरूपताम् आत्मनो दर्शयेत् तदा सोपि सभ्यमध्ये एव गण्यते ।

Then those ( e. g. Srisankuka and others ) who hold that रस is with reference to the doings of a नट ( नटवृत्तिगत ), we say that this too is wrong; for due to instruction practice ( अभ्यास ) etc the actor showing the self-same role of Raghava etc cannot be the only enjoyer of रस; moreover due to deliberation of काव्यार्थ i. e. as he is to think on the काव्यार्थ he is to perform on the stage, he ( नट ) too is a सभ्य or audience. In fact the actor imitating the character of Rama etc and by thinking over the काव्यार्थ is no better than an audience.

रस is स्वप्रकाश i.e. it arises by its own self, so it is not ज्ञाप्य even—So our author now rejects the view of ज्ञाप्यता of रस—

नायं ज्ञाप्य: स्वसत्तायां प्रतीत्यव्यभिचारत: ॥२०॥

यो हि ज्ञाप्य: घटादि: स सन्नपि कदाचित् अज्ञातो भवति, न ह्ययं तथा । प्रतीतिमन्तरेण अभावात् ।

रस is neither ज्ञाप्य or ज्ञानजन्यविषय, for its प्रतीति itself constitutes its सत्ता ( existence or relishment ); it cannot go without प्रतीति। For example the घट etc that are ज्ञाप्य is sometimes said to exist though not known, but रस is

not so; for it cannot be got or exist without प्रतीति or knowledge thereof—it is thus स्वप्रकाश and not ज्ञानान्तरग्राह्य।

Cp. "एवम् यो यो ज्ञाप्यः स प्रतीतिं विनापि कदाचित् अवतिष्ठते यथा घटादिः। तद्विलचणोयं रसः। प्रतीतिमन्तरेण अस्य अभावात्"।

Now our author refutes the view that रस is कार्य्य (an effect)—

यस्मादेष विभावादिसमूहालम्बनात्मकः।
तस्मान्न कार्य्यः

यदि रसः कार्य्यः ( रसस्य विभावादिज्ञान-कारणकत्वाङ्गीकारे सति ) रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञान-तत्कार्य्यज्ञानादीनां युगपत् अदर्शनात्। न हि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानं चैकदा सम्भवति। रसस्य च विभावादि-समूहालम्बनात्मकतया एव प्रतीतिः न विभावादिज्ञानकारणकत्वम् इत्यभिप्रायः।

Hence as रस is seen to exist with the support of विभाव—अनुभाव and व्यभिचारिविभाव it is not कार्य्य even i.e. it is not the effect of विभाव etc. If रस is कार्य्य though it should be caused by विभाव etc, then during its प्रतीति or relishment, विभाव etc should not be known to exist or taken into cognisance ( विभावादयः तदा न प्रतीयेरन् ); because in nature we see that knowledge of कारण and knowledge of कार्य्य cannot exist or occur simultaneously. So the knowledge of the touch of चन्दन and the knowledge of the pleasure there-

from cannot take place at one and the same time ( न एकदा सम्भवति )।

But as we have seen before, रस is the conglomeration of विभाव etc—it is not taken separately therefrom—they exist and coexist, विभाव etc are its support or आलम्बन; so रस is not due to the knowledge of विभाव etc ( न विभावादिज्ञानकारणत्वम् अस्य )।

But remember that रस is not नित्य—

नो नित्यः पूर्वसंवेदनोज्झितः।
असंवेदनकाले हि न भावोप्यस्य विद्यते ॥२१॥
न खलु नित्यवस्तुनः असंवेदनकाले असम्भवः।

Rasa is also not नित्य or ever-existent; for its existence ( भाव ) cannot be inferred, known or cognised so long as विभाव, अनुभाव and व्यभिचारिभाव are not present ( विभावादीनाम् असंवेदनकाले रसः न प्रतीयते ); hence its knowledge of existence is not felt, so long as विभाव etc are not known—it is पूर्वसंवेदनोज्झित। [ पूर्वसंवेदन is विभावादिज्ञानात् प्राक्ज्ञानम्—knowledge before the cognisance of विभाव etc, तद्रहितः रसः=रस is bereft of it—so it not नित्य ]। Compare—"यदि रसो नित्यः स्यात् तदा विभावादिज्ञानात् प्रागपि ज्ञायेत"। On the other hand a नित्यवस्तु does not even become non-existent when it is not so cognised, e.g. as our ever-existent Soul

रस again is neither भविष्यत् or वर्त्तमान even—

नापि भविष्यन् साक्षादानन्दमयप्रकाशरूपत्वात्
कार्य्यज्ञाप्यविलक्षणभावान्नो वर्त्तमानोपि ॥२२॥

रस is neither a future matter ( भविष्यत् ), for during its cognisance or relishment it appears as आनन्दमय and it is so whenever it arises ( it is प्रत्यक्षानन्दमयरूप ); again ( as already hinted before ) रस being neither a कार्य्य ( effect ) or ज्ञाप्य i. e. a matter of inference, it is not वर्त्तमान too ; for a वर्त्तमान matter is either a कार्य्य or ज्ञाप्य ( वर्त्तमानवस्तुन: कार्य्यज्ञाप्यान्यतरत्वनियमात् नासौ रस: वर्त्तमान: इतिभाव: )।

The author further gives some others of रस's negative characteristics—

विभावादिपरामर्शविषयत्वात् सचेतसाम् ।
परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ॥२३॥
न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ।
तथाभिलापसंसर्गयोग्यत्वविरहान्नच ॥२४॥
सविकल्पकसंवेद्य:

सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता । न तु रसस्य तथा ।

In spite of the above characteristics—रसग्रहण again is not a matter of निर्विकल्पज्ञान—निर्विकल्पज्ञान is not its ग्राहक ; for it arises to the sympathetic mind ( सचेतस् ) due to presence or contact of विभाव etc ; though it is known to be परमानन्दमय, still it being due to contact ( संसर्ग ), रसग्रहण cannot be a

निर्विकल्पज्ञान, for निर्विकल्पज्ञान is not due to any contact whatsoever ("निर्विकल्पकं संसर्गानवगाहि")। It is not even a सविकल्पज्ञान, for it has no connection with अभिलाप or वचनसंसर्ग during its relishment—रसग्रहणस्य वचनसंसर्गयोग्यत्वाभावात् नासौ सविकल्पकसंविदा, and सविकल्पकज्ञान is due to वचनप्रयोगयोग्यता। Being again स्वप्रकाश and being ज्ञानान्तरग्राह्य, रस strictly speaking cannot be सविकल्पक।

Compare—"नामरूपजात्यादिशून्यं निर्विकल्पकम्। तद्युक्तं सविकल्पकम्। तत्र रसः केन गृह्यते इत्याशङ्क्याह—नान्यभावेनासौ गृह्यते। विभावादिनिष्ठत्वात् परमानन्दनिष्ठत्वाच्च नासौ निर्विकल्पकः। वचनसंस्पर्शयोग्यत्वाभावात् स्वप्रकाशत्वेन ज्ञानान्तरग्राह्यत्वाच्च नासौ सविकल्पकः"।

साक्षात्कारतया न च।
परोक्षस्तत्प्रकाशे नापरोक्षः शब्दसम्भवात् ॥२५॥

As रस is directly perceptible during relishment due to स्वादन and चर्वणव्यापार, it is not परोक्ष or beyond the ranges of senses; neither it is अपरोक्ष or within the range of senses, for it arises only through knowledge of विभाव etc. due to reading of काव्य or seeing of a drama—and these are not comprehended within the range of senses--

Compare—"स्वादनाख्यव्यापारस्य मनःसन्निकर्षत्वाङ्गीकारेण तज्जन्यत्वात् नासौ रसः परोक्षः। नापि प्रत्यक्षरूपः, शब्दसम्भवात् काव्यजन्यविभावादिज्ञानजन्यत्वनियमात्"।

You have so long given only negative characteristics of रस—its इतरभेदानुमापकलक्षण only, now say something of its

essential characteristics—स्वरूपज्ञापकलक्षण ; so the author now says—

तत् कथय कीदृग् अस्य ( रसस्य ) तत्त्वम् ( याथार्थ्यम् ) अश्रुतादृष्टपूर्वनिरूपणप्रकारस्य इत्याह—

तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ।

You have here said रस is neither कार्य or ज्ञाप्य, neither भविष्यत् or वर्तमान, neither निर्विकल्पक or सविकल्पक, neither even परोक्ष or अपरोक्ष ; now tell me its तत्त्वम् or essence—it being some thing अश्रुतपूर्व and अदृष्टपूर्व ; in your given definition रस being something different from लौकिकानन्द it is अलौकिक, in other words its श्रवण or दर्शन in others being impossible this being its speciality, it is अलौकिक ( Compare—अन्यत्रश्रवणादर्शनम् अस्य अलौकिकवस्तुसिद्धौ गुणएव न तु दोषः । एतत् अलौकिकवस्तु सिद्धेर्भूषणमेव न तु दूषणम्" ) it is known, cognised and relished by the सहृदय only due to स्वादना and चर्वणा व्यपार as stated before.

तत् किं पुनः प्रमाणं तस्यसद्भावे इत्याह—

प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥२६॥

चर्वणा आस्वादनम् । तच्च "स्वादः काव्यार्थसंभेदात् आत्मानन्दसमुद्भवः" इत्युक्तप्रकारम् ।

Hence if it be said that what is the प्रमाण ( authority ) as to the existence of रस, we ( the author ) as well, will say that चर्वणा or आस्वादना of रस is the final and best प्रमाण that it exists—'स्वाभिन्ने' चर्वणा-अभिन्ने चर्वनास्वरूपे रसे विदुषां चर्वणा एव

प्रमाणम्" । It is further said—चर्वणैव भगवती, स्वसंवित्-स्वस्वरूपात् अभिन्ने तस्मिन् प्रमाणम्" । चर्वणा is रसस्वरूप, it is आत्मानन्दसमुद्भव-स्वादविशेष due to mixed different matters of काव्य ( काव्यार्थसंभेदात् ) ।

ननु यदि रसो न कार्य्यस्तत्कथं महर्षिणा 'विभावानुभाव-व्यभिचारिसंयोगात् रसनिष्पत्तिः' इति लक्षणं कृतम् ? इत्युच्यते—

"निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः" ।

यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्य्यत्वं तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते ।

If then रस is not an effect ( न कार्यः ), then how sage Bharata has said this characteristic of रस "that रस culminates due to connection of विभाव, अनुभाव and व्यभिचारिभाव" ? On this our author says—that culmination ( निष्पत्ति ) of आस्वादन or चर्वण is attributed to रस and said that it is due to विभाव etc ; in reality, रस and चर्वणा are not distinct they are अभिन्न, so आस्वादननिष्पत्ति also is not the effect of रस ; but the fact is, as there is आविर्भाव ( advent ) and तिरोभाव ( vanish ) of आस्वादन it is कदाचित्भव with regard to रस—so it ( आस्वादन ) is treated as a कार्य्य of रस secondarily, and is hence attributed to रस by transference ( उपचार ) ।

Compare—"तस्य चर्वणस्य कादाचित्कतया" आविर्भावतिरोभाववशेन कदाचिद्भवतया 'उपचरितेन' लक्षणया प्रतीतेन 'कार्य्यत्वेन' कार्य्यसादृश्येन हेतुना 'कार्य्यत्व'' कार्य्यसादृश्यम् 'उपचर्य्यते' निरूक्तपरम्परासम्बन्धेन प्रयुज्यते" ।

अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥२७॥

'तस्य' रसस्य। 'अवाच्यत्वादिकम्' इत्यत्र आदिशब्दात् 'अलक्ष्यत्वादि'।

And in fact I shall say that रस is neither वाच्य (directly known by conventional meaning of words ) nor it is लक्ष्य ( to be traced or hinted by words ), but a matter to be got by व्यञ्जना ( or suggestion due to वासना latent in a सहृदय person ); I shall say this clearly in the fifth chapter during व्यञ्जनानिरूपण। ("व्यञ्जनानिरूपणे व्यञ्जनायाः प्रमाणनिरूपणे पञ्चमपरिच्छेदे इत्यर्थः अहं सर्वमेतत् वक्ष्ये")।

ननु यदि मिलिता रत्यादयो रसाः तत् कथमस्य स्वप्रकाशत्वं कथं वा अखण्डत्वमित्याह—

रत्यादिज्ञानतादात्म्यादेव यस्माद्रसोभवेत्।
ततोस्य स्वप्रकाशत्वमखण्डत्वञ्च सिध्यति ॥२८॥

If रति etc, that are conglomeration of विभाव etc, are treated as रस, then how रस is स्वप्रकाश ( self-illuminating ) or अखण्ड i.e. uniformly one or एकस्वरूप having no break or decrease in स्वाद ? on this the solution is—the authoritative saying "विभावादिसंयोगात् रत्यादिः रसो जायते" establishing inseparable connection of रति etc, with its विभाव etc, and the knowledge of this एकस्वरूपता—that is the तादात्म्य of रति etc with its विभाव etc, during आस्वादन constitutes its स्वप्रकाशता and अखण्डता as well—अस्य रसस्य तथा प्रकाशशरीरात् अतिरिक्तत्वम् नास्ति। Our author further illustrates this point thus—

यदि रत्यादिकं प्रकाशशरीरात् अतिरिक्तं स्यात्तदा एवास्य स्वप्रकाशत्वं न सिध्येत्। न च तथा। तादात्म्याङ्गीकारात्। तदुक्तम्—

मुनिना ( भरतेन )—"यद्यपि रसानन्यतया चर्वणापि न कार्य्या तथापि कादाचित्कतया कार्य्यत्वमुपकल्प्य तदेकात्मनि अनादिवासनापरिणतिरूपे रत्यादिभावेपि व्यवहार इतिभावः:" इति। सुखादितादात्म्याङ्गीकारे च आस्माकीं सिद्धान्तशय्यामधिशय्य दिव्यंवर्षसहस्रं प्रमोदनिद्रामुपेया इति च। "अभिन्नोपि स प्रमाता वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः' इति च। ज्ञानस्य स्वप्रकाशत्वम् अनङ्गीकुर्वताम् ( नैयायिकानाम् ) उपरि वेदान्तिभिरेव पातनीयो दण्डः। तादात्म्यादेवास्य अखण्डत्वम्।

If रति etc were something different from their manifestations in the shape of विभाव, अनुभाव or व्यभिचारिभाव, then रति etc would not have been स्वप्रकाश—then स्वप्रकाशत्व could not have been established: But as Rhetoricians ( like us ) accept तादात्म्य ( inseparability of रति and विभाव etc ), so रति etc are स्वप्रकाश। Thus sage Bharata says" रस being inseparable, from विभाव etc, its चर्वणा or आस्वादना (enjoyment) too cannot be said of it ( चर्वणा न कार्य्या ) all being inseparable ; and then the saying "निष्पत्त्याचर्वणस्य रसस्य निष्पत्तिरुपचारतः" becomes inconsistent and goes amiss ; but this is not so ; the fact is, the effect of रस i.e, चर्वणा is attributed to it and चर्वणा which is due to internal वासना and is in-

separable from रस is thus ascribed to and transformed into रति etc ( रसेकात्मनि चर्वणास्वरूपे रसे ); in reality रस is thus not कार्य्य । If again रस is taken as something inseparable from सुख or bliss ( चमत्कारप्राण ) then you accept our सिद्धान्त and rise on the land of our conclusion and enjoy blissful sleep there for thousands of divine years. Thus this रस is nothing but to be enjoyed ( स्वस्मात् अभिन्नोयं रस: ) by the enjoyer (प्रमाता आस्वादनीय: ) and it is made to appear before him through रत्यादिवासना lying in his संस्कारात्मक mind. Thus ज्ञान of रत्यादि makes it स्वप्रकाश । But if following the view of Naiyayikas that ज्ञान is not स्वप्रकाश but it is got by अनुव्यवसाय etc, you say रस as not स्वप्रकाश, then vedantins will let their arguments fall on you i.e, vitiate your नैयायिकमत । Thus we rhetoricians accept this तादात्म्य of रस and विभाव etc, and take रस as स्वप्रकाश and so अखण्ड as well during enjoyment.

रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते । तदुक्तम्—

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥—इति ।

परमार्थतस्तु अखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववत् वेदितव्यः" इति च ॥

The sentiments of Rati ( amour ) etc first appear or shine separate as one by one within us, they then become a whole one unit ( i. e. mixed as one ) and attain the stage

of Rasa ( रसताम् आपद्यन्ते ). So it is said—विभाव ( prop of sentiment ) अनुभाव ( outward manifestations ) सात्त्विक (internal pure feeling ) व्यभिचारिणः ( concomitant emotion ) first appear as separate then they get mixed as one whole. In reality the sentiment of Rati etc is to be known as one whole ( अखण्ड ) like the well-known Blissful Brahman of the vedanta ( or Upanishad )—[ चिदानन्दचमत्कारात्मैकरसरूपत्वम् स्यात् ] ।

Now the author states विभाव, अनुभाव and व्यभिचारिभाव that go to comprise a Rasa—

अथ केते विभावानुभावव्यभिचारिणः इत्यपेक्षायां विभावमाह—

रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ।

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तः "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते । तदुक्तं भर्तृहरिणा ( वाक्यपदीयकर्ता )—

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ॥"

The question now being what are these विभाव, अनुभाव and व्यभिचारिभाव, the author first narrates विभावः—In काव्य and in performances ( नाट्य ) विभाव are those that excite (cause) or inflame Rati etc in the world

Sita etc that are depicted in काव्य ( literature ) or नाट्य ( performances ) as exciting or giving advent to amour, laughter etc in Rama etc are called विभाव ( the prop or आलम्बन ) of sentiments ; these are called विभाव for these make Rati etc in the audience, fit to be germinated and relished. Thus Bhartrihari also says in his Vakyapadiya— "directly peceived Kamsa etc attaning shape by words in books and cognised or enjoyed as such are taken as causes of Sentiment."

**तद्भेदावाह—आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ॥**

**स्पष्टम् ।**

**तत्र—आलम्बनो नायिकादिस्तमालम्ब्य रसोद्गमात् ॥**

**आदिशब्दात् नायिकाप्रतिनायिकादयः । अत्र यस्य रसस्य यो विभावः स तत्स्वरूपवर्णने वक्ष्यते ।**

विभाव has got two types ( द्वौ भेदौ ) e.g, आलम्बनविभाव (main prop) उद्दीपनविभाव ( excitants like moon-rise etc, in amour or Sringara ).

The prop or mainstay ( आलम्बन विभाव ) is the heroine or or her rival ( प्रतिनायिका ) etc, for Rasa arises with reference to her.

The respective Bibhava of each separate Rasa will be enumerated while describing each Rasa separately.

[ For अनुभाव and व्यभिचारिभाव—see ante and Infra ].

From आलम्बन नायिका, the question of नायक ( hero ) also arises, so our author now says—

तत्र नायकः—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोक स्तेजोवैदग्ध्यशीलवान् नेता ॥३०॥

दक्षः क्षिप्रकारी, शीलं सद्वृत्तम् । एवमादिगुणसम्पन्नो नेता नायको भवति ।

And a नायक ( hero ) or नेता will be sacrificing, successful, well-behaved, dexterous in execution, good-looking, born in a high family, full of charming youth, enterprising and having courage and adaptability or learning, and a popular figure.

तद्भेदानाह ( नायकभेदानाह )—

धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ॥२१॥ स्पष्टम् ।

First of all, there are four types of नायक—(1) धीरोदात्त (2) धीरोद्धत (3) धीरललित and (4) धीरप्रशान्त ।

तत्र धीरोदात्तः—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥२२॥

अविकत्थनः अनात्मश्लाघाकरः । महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः । निगूढमानो विनयच्छन्नगर्वः । दृढव्रतः अङ्गीकृतनिर्वाहकः । यथा, रामयुधिष्ठिरादिः ।

Of these a धीरोदात्त is one devoid of self-conceit, forgiving, highly grave, of unperturbed mentality, abiding, having pride checked by modesty and acting up to his words ; as for example character of Ramachandra in Ramayana or Yudhisthira in Mahabharata etc.

अथ धीरोद्धतः—

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरै र्धीरोद्धतः कथितः ॥३३॥

यथा—भीमसेनादिः ।

A धीरोद्धत नायक is one who is wily, rash, unsteady, full of pride and haughteur like Bhimasena etc.

अथ धीरललितः—

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ॥

कलानृत्यादिका । यथा—रत्नावल्यादौ वत्सराजादि ।

A धीरललित नायक is one who is self-resigned depending, soft and is ever engaged in arts, as वत्सराज etc in Ratnavali etc.

अथ धीरप्रशान्तः—

सामान्यगुणैर्भूयान्द्विजादिको धीरशान्तः स्यात् ॥३४॥

यथा—मालतीमाधवादौ माधवादिः ।

And a धीरप्रशान्त नायक is a twice-born who is well up in the general qualities of head and heart of a hero ; as

Madhava etc in Malati madhava etc. (See Mita. Tika below also).

एषां च शृङ्गारादिरूपत्वे भेदानाह—

एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा ।

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः । ( शृङ्गारे षोड़शप्रकारो नायको भवति ) ।

एषु त्वनेकमहिलासमरागो दक्षिणः कथितः ॥३५॥

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः ।

यथा—

'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च ।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥'

( दण्डान् व्याप्यदेवेन तेन स्थितम् ) ।

मित—। अहंकारः, अहं महानिति ज्ञानविशेषः । दर्पः शौर्यवीर्याद्यतिशयः । रुदुर-प्रचण्डचरितः । सामान्यगुणैर्नायकसामान्यगुणैः । धीरोदात्तादिवितयभिन्नो नायको धीरप्रशान्त इत्यभिप्रायः ॥ एषां धीरोदात्तादीनाम् भेदा षोडशेति । शृङ्गारे षोडश-प्रकारो नायको भवति । रसान्तरे तु चतुष्प्रकार इत्यवधेयम् ॥ स्नाता ऋतुस्नाता । वारः सुरतार्थं नियमितदिवसः । जिता जयेनात्मसुरतार्थं प्राप्ता । देवी कृताभिषेका राजपत्नी प्रसाद्या । देवेन राज्ञा । अप्रतिपत्त्या कर्तव्यानिश्चयेन मूढं व्याकुलम् मनोऽस्य, तेन देवेन नाड़िकाः दण्डान् व्याप्य स्थितम् ।

कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः ॥

( कृतागाः = कृतापराधः ) ।

यथा मम—

'शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि
किंचित्तत्र विधातुमक्षमतया बाष्पं सृजन्त्याः सखे
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥'

अनूकूल एकनिरतः—

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः ।

यथा—

'अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किंत्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥'

शठोऽयमेकत्र बद्धभावो यः ।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥३८॥

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकायां गूढं विप्रियमाचरति स शठः ।

मित—। कृतागाः कृतापराधः । मिथ्यावाक् मयैतन्न कृतमित्ययथार्थवचनः । अत्र प्रथमपादेन कारिकायाः प्रथमपादोक्तं द्वितीयपादेन द्वितीयपादोक्तं लक्षणं वेदितव्यम् ॥ अस्माकमिति । कस्याश्चिन्नायिकाया उक्तिरियम् । ग्रैवेयकं कण्ठभूषणम् । वक्रा चित्रा । उद्धतमुत्कटम् । सौभाग्ययौवनाद्यवलेपजो विकारो मदः । नायकवशीकरणकारणं मम किमपि नास्ति । किंतु नायकं [illegible] अन्ये परकीयाः ।

अपिना स्वकीयाः। सुभगोऽपि नायिकान्तरप्रियोऽपि। यद्वा मनोज्ञोऽपि। अन्यतो नायिकान्तरे। द्वयता वादेन दुःखितं दुष्टचित्तं प्रतिकूलं वा विश्वं मन्यामहे॥ बहुभावो निसृतानुरागः। दर्शितो भूषणदानादिसाम्येन प्रकटितो बहिः सुरतातिरिक्तोऽनु-रागो येन॥

यथा—

'शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
　　यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः।
तदेतत्काचक्षे घृतमधुमयत्वाद्बहुवचो
　　विषेणाघूर्णन्तो किमपि न सखी मे गणयति॥"

एषां च त्रैविध्यादुत्तममध्याधमत्वेन।
उक्ता नायकभेदाश्चत्वारिंशत्तथाष्टौ च॥३८॥

एषामुक्तषोडशभेदानाम्॥

अथ प्रसङ्गादेतेषां सहायानाह ( Assistants )—

दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु।
किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः॥३९॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसंगते इतिवृत्तेऽनन्तरोक्तै-र्नायकसामान्यगुणैः किंचिदूनः पीठमर्दनामा सहायो भवति। यथा—रामचन्द्रादीनां सुग्रीवादयः॥ [ पीठं कार्यपीठं मृद्नाति इति पीठमर्दः, कर्मण्यण् प्रत्ययः ]।

टीका—। शठेति। दूत्या वचनमिदम्। कथाचक्षे कुत कथयामि। न कुत्रापी-त्यर्थः। घृतमधुमयेति। घृतमधुतुल्येत्यर्थः। घृतमधु यथा आपाततः स्वादु पश्चाद्विषम्, तथा तव वचनमप्यापाततो रमणीयं पश्चादनिष्टाचरणेनायथार्थत्वप्रति-

भासादिषतुल्यमिति भावः। किमपि हितमहितं वा। गणयति निश्चिनोति॥ एषां नायकानाम्। दूरानुवर्तिनीत्यस्यार्थमाह—बहुव्यापिनीति। इतिवृत्ते कर्तव्यकर्मणि॥

अथ ( नायकस्य ) शृङ्गारसहायाः—

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।
भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥४०॥

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः।

तत्र विटः—

संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्ग्मी ( वाग्मी ) मधुरोऽथ बहुमतो गोष्ठ्याम् ॥४१॥

चेटः प्रसिद्ध एव॥

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥४२॥

स्वकर्म भोजनादि॥

अर्थचिन्तने सहायमाह—

मन्त्री स्यादर्थानां चिन्तायां—

अर्थास्तन्त्रावापादयः।

( भक्ता नायकानुरक्ताः। नर्मसु परिहासेषु। शुद्धाः परदारगमनादिदोषरहिताः॥ संभोगहीना अपकृष्टा संपद् यस्य सः। नृत्यादिकलानामेकदेशं जानाति, नतु समुदायम्। वेशस्य उपचारे करणे कुशलः॥ विदूषकमाह—कुसुमेति। वपुरिति शरीरचेष्टाविशेष इत्यर्थः॥ मन्त्रीति। 'स्यात्' इत्यस्य 'सहायः' इति चानुषज्यते। अर्थस्य

चिन्तायामुपायनिरूपणे। स्वमण्डले क्रियमाणं कर्म तन्त्रम्। परमण्डले क्रियमाणं कर्म आवापः। आदिना शत्रु निग्रहादयः।)

यत्त्वत्र सहायकथनप्रस्तावे 'मन्त्री स्वं चोभयं चापि सखा तस्यार्थचिन्तने' इति केनचिल्लक्षणं कृतम्, तदपि राज्ञोऽर्थ-चिन्तनोपायलक्षणप्रकरणे लक्षयितव्यम्। न तु सहायकथनप्र-करणे। 'नायकस्यार्थचिन्तने मन्त्रीसहायः' इत्युक्तेपि नायकस्यार्थत एव सिद्धत्वात्। यदप्युक्तम् 'मन्त्रिणा ललितः शेषा मन्त्रिष्वायत्त सिद्धयः' इति, तदपि स्वलक्षणकथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम्। न चार्थचिन्तने तस्य मन्त्री सहायः। किं तु स्वयमेव संपादकः। तस्यार्थचिन्तनाद्य-भावात्।

(N. B.—अर्थ is तन्त्र or स्वराष्ट्रचिन्ता (thought of Home affairs) and आवाप is परराष्ट्रचिन्ता ( thought of foreign affairs ).

Dhananjaya the author of Dasarupa has said in continuation of his chapter on सहायकथन ( statement of assistant ) "that minister is his सखि ( =instrument or means—सखिशब्दस्य उपायार्थत्वम )". but this is with reference to king's mode ( उपाय ) of अर्थचिन्ता and not stated directly in the context of सहायकथन। And when it is said by him that "नायकस्य अर्थचिन्तने मन्त्रीसहाय :" it goes without saying that minister is नायक's सहाय। Again his saying "मन्त्रिणा ललितः शेषा मन्त्रिष्वायत्तसिद्धयः" (i.e, धीरललित is मन्त्रिणा सम्पादितसिद्धि and the rest of Nayaka is dependent on minister for success ) also points to Dhiralalita's dependence on the minister

for अर्थचिन्तन, and is in keeping with his def. of dhiralalita; मन्त्रिन् is not his सहाय here but the doer (सम्पादक); for धीरललित has no अर्थचिन्तादि, he being "निश्चिन्त" (as said in the def). So nothing is contradictory in our (author's) saying "अर्थचिन्तने सहायमाह" ॥

अथान्तःपुरसहायाः—

तद्वदवरोधे।
वामनशण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः ॥४३॥
मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः।
सोयमनूढो भ्राता राज्ञः स्यालः शकार इत्युक्तः।

आद्यशब्दान्मूकादयः। तत्र शण्ढवामनकिरातकुब्जादयो यथा रत्नावल्याम्—

[ तद्वदिति। अवरोधेऽन्तःपुरे वामनादयो नायकस्य सहाया इत्यर्थः। शण्ढश्छिन्नोपस्थः क्लीबो वा। शकारमाह—मदेति। मदमूर्खताभ्यामभिमानी अहं महानिति ज्ञानवान्। मदादिविषयवान् वा ]

'नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥'

शकारो मृच्छकटिकादिषु प्रसिद्धः। अन्येऽपि यथादर्शनं ज्ञातव्याः ॥

अथ दण्डसहायाः—

दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ॥ (नायकस्य)

दुष्टनिग्रहो दण्डः। अन्यत् स्पष्टम्।

ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ॥४५॥

ब्रह्मविदो वेदविदः, आत्मविदो वा।

अत्र च—

उत्तमाः पीठमर्दाद्याः

आद्यशब्दान्मन्त्रिपुरोहितादयः।

मध्यौ विटविदूषकौ।

तथा शकारचेटाद्या अधमाः परिकीर्तिताः ॥४६॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः।

टीका—वानरवेषेणान्तःपुरंप्रविष्टं विदूषकमालोक्य भयेनान्तःपुरःस्थानां पलायनवर्णनमिदम्। नष्टमदर्शनतां प्राप्तम्। वर्षवरैः शण्ढैः। 'सौविदल्लाः कञ्चुकिनः' इत्यमरः। किरं पर्यन्तदेशमततीति किरात इति नाम्नः स्ववाचकशब्दस्य सदृशं योग्यं कृतं पर्यन्तदेशं प्राप्त इत्यर्थः। मृच्छकटिकं नाटकविशेषः। अन्ये म्लेच्छाभीरादयः। आटविका वनचारिणः। ऋत्विगिति। धर्मे धर्मकर्मणि नायकस्य सहाया इत्यर्थः। आत्मविदो योगिनः॥ * सुश्लिष्टं सुमङ्गलम्। (1) मितार्थभाषी अल्पार्थकथकः। (2) स्वामिना यावदुक्तं तावदेव संदेशः, तं हरति व्याहरतीति सः।

अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह—

निसृष्टार्थो मितार्थश्च तथा संदेशहारकः।

कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥४७॥

तत्र कार्यप्रेष्यो दूत इति लक्षणम्। (Three Kinds of Duta)

तत्र—

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं * कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥४८॥

उभयोरिति येन प्रेषितो यदन्तिके प्रेषितश्च ।

मितार्थभाषी (1) कार्यस्य सिद्धकारी मितार्थकः ।
यावद्भाषितसंदेशहारः संदेशहारकः (2) ॥४९॥

अथ सात्त्विकनायकगुणाः—

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ।
ललितौदार्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥५०॥

तत्र ( शोभा )—

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।
नीचे घृणाधिके स्पर्धा यतः शोभेति तां विदुः ॥५१॥

तत्रानुरागिता यथा—

'अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥'-(Rag)

एवमन्यदपि ।

अथ विलासः—

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।

यथा—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो

वीरो रसः किमयमित्युत दर्प एव ॥'—(Uttara)

टीका—। सत्त्वगुणाज्जाताः सत्त्वजाः सात्त्विकाः गुणाः। स्तम्भादीनां सात्त्विकत्वेऽपि ते नायकस्य नायिकायाश्च भवन्ति। एते पुनर्नायकस्यैवेति विशेषः। पौरुषा नायकसंबन्धिनः। महानुत्साह उद्यमः। नीचे क्षुद्रे। घृणा दया॥ महीपतेरजस्य। प्रकृतिषु मन्त्रिप्रभृतिषु। निम्नगाशतेषु नदीसमूहेषु। अस्य अजस्य॥ अन्यच्छूरतादि इत्यर्थः॥ लघीकृतौ तुच्छीकृतौ जगत्त्रयस्य सत्त्वमुत्साहः सारो बलं यया सा। धीरा मन्थरा। उद्धता उद्भटा च। एतेन गतेःस्थिरत्वं नैकरूपत्वं च। अत्र नायकस्य उत्साहदर्पयोरतिशयनाय वीररसत्वेन दर्पत्वेन च वर्णनम्॥

संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ॥५२॥

तस्य उदाहरणम् ॥

भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता।

यथा—

'आहूतस्याभिषेकाय विसृष्टस्य वनाय च।

न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः॥'

व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ॥५३॥

यथा—

'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव।

आत्मेश्वराणां नहि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति॥' (Ku)

अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत्।

प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥५४॥

वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम्।

दानं सप्रियभाषणमौदार्यं शत्रुमित्रयोः समता ॥५५॥

एषामुदाहरणान्यूह्यानि ॥ (Now nayikas are being said)

अथ नायिका त्रिभेदा—स्वान्या साधारणी स्त्रीति।

टीका—। ऊह्यमुदाहरणमिति—यथा मम रामविलासे—'तन्निपीय कटुकर्णपदव्यां खिदमाप न मनागपि रामः। शूलपाणिरिव घोरमुदग्रं कालकूटपटलं किल पूर्वम् ॥' तस्य घोरासस्य, आकारो मुखनेत्रादि तस्य विक्रमो वैपरीत्यं येन हर्षशोकादयो लक्ष्यन्ते॥ व्यवसायात् प्रारब्धकर्मणः अचलनम् अप्रच्यवनम्॥ प्रसंख्यानपरो योगनिष्ठः। आत्मेश्वराणां मनोनिरोधक्षमाणाम् ॥ अधिक्षेपो भर्त्सनम्। अपमानः पराभवः। आदिना अपकारादि। प्रयुक्तस्य कृतस्य। परिणा श्रवणा। उदाहरणं यथा रामविलासे—'विस्फारस्फुरदोष्ठपल्लवमतिभिन्नातिकान्तं क्रुधा किंचिल्लोहितलोचनास्बुजयुगेनाकुञ्चितभ्रूलतम्। युक्तं तस्य दुरुक्तमुत्तरयितुं तेजोभराद्युद्यतं नेवान्तेन निवार्य लक्ष्मणममुं प्रोचे स्वयं राघवः॥' विस्फारमत्यन्तं स्फुरदोष्ठं यस्य तम्। तस्य भार्गवस्य। अमुं भार्गवम् ॥ तद्वन्मधुरतायुक्तम्। ललितौदार्ययोरुदाहरणे मम—'वीक्ष्य तस्य रुचिरं कलेवरं संनिशम्य मधुरं च भाषितम्। स्मारसारमुपलभ्य विभ्रमं दास्यमस्य कलयन्ति सुभ्रुवः॥', 'दत्ते सहासवचनं सप्रियवचनं च भूपालः। रिपुरपि लभते मानं निरीतिभावं धरा तस्मात् ॥'

नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता ॥५६॥ (नायिका)।

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासंभवैर्युक्ता भवति। सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा।

तत्र स्वस्त्री—

विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।

यथा—

लज्जापज्जत्तपसाहणाइँ परभत्तिणिप्पिवासाइं।

अविणअदुम्मेधाइं धरणाणं घरे कलत्ताइं ॥' (See Tika)

साऽपि (स्वीया) कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति ॥५७॥

तत्र—

प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥५८॥

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम्—

'मध्यस्य प्रथिमानमेति जघनं, वक्षोजयोर्मन्दता
दूरं यात्युदरं च, रोमलतिका नेत्रार्जवं धावति, ।*

[ टीका—स्वीया, अन्या अन्यदीया। साधारणी सर्वोपभोगयोग्या। 'स्त्री' इति सर्वत्रान्वेति। यथासम्भवैरिति—तेन दक्षतौज्ज्वल्यतेजांसि नायिकानां न वर्णनीयानि। अत एव दक्षतादयो नायकस्यैव सात्त्विका गुणाः पूर्वम् उक्ताः। [ लज्जे ति। 'लज्जापर्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि। अविनयदुर्मेधानि धन्यानां गृहे कलत्राणि॥' इति संस्कृतम् ]। लज्जायै पर्याप्तानि समर्थानि प्रसाधनानि भूषणानि येषां तानि। अविनयदुर्मेधानि अविनयानभिज्ञानि॥ सापि स्वकीयापि। अवतीर्णमुत्पन्नम्। मध्यस्येति सुगमम् ]।

* कंदर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥'

प्रथमावतीर्णमदनविकारा यथा मम प्रभावतीपरिणये—

'दत्ते सालसमन्थरं भुवि पदं, निर्याति नान्तःपुरात्,
नोद्दामं हसति, क्षणात्कलयते ह्रीयन्त्रणां कामपि,
किंचिद्भावगभीरवक्रिमलवस्पृष्टं मनागभाषते,
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥'

रतौ वामा यथा—

'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता,
शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया॥'

माने मृदुर्यथा—

'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥'

साधिकलज्जावती यथा—

'दत्ते सालसमन्थरं—' इत्यत्र श्लोके।

अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनम्। (1)

अथ मध्या—

मध्या विचित्रसुरता प्ररूढस्मरयौवना।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता॥४९॥

विचित्रसुरता यथा—

'कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्यमुद्गतमनोभवया रतेषु।
तत्कूजितान्यनुवदद्भिरनेकवारं
शिष्यायितं गृहकपोतशतैर्यथास्याः॥'

[ (1) ननु सलज्जिकलज्जावती इति पृथगुपादानं किमर्थमित्याह—अत्रेति। विच्छित्तिविशेषवत्तया वैचित्र्यविशेषसंपादकत्वेन। ]

प्ररूढस्मरा यथात्रैवोदाहरणे।

प्ररूढयौवना यथा मम—

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्यन्दिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा॥'

एवमन्यत्रापि।

अथ प्रगल्भा—

स्मरान्धा गाढतारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका॥६०॥

स्मरान्धा यथा—

'धन्यासि या कथयसि प्रियसंगमेऽपि
विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किंचिदपि स्मरामि॥'

गाढतारुण्या यथा—

'अत्युन्नतस्तनमुरो नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चोद्गतयौवनायाः॥'

समस्तरतकोविदा यथा—

क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रिया सर्वावस्थं कथयति रतं प्रच्छदपटः॥'

टीका—गुह्यकथालापिनीं कांचिदुपहसन्त्याः कस्याश्चिदुक्तिरियम्। प्रियस्य संगमेऽपि स्पर्शमात्रेऽपि या त्वं विश्रब्धेन विश्वासेन चाटुकशतानि प्रियोक्तिशतानि कथयसि सा त्वं धन्या। किमुत रतान्तरेषु। शपामि केवलं शपथं करोमि, अतः अत्र परस्मपदमिष्टम्॥ ततोऽपि भूयामपि। अतितरामत्यर्थं वक्रमित्यर्थः। अनूनगुरुः अतिस्थूलः। किमप्यत्यर्थम्। उद्भूतयौवनायाः उद्दामयौवनायाः॥ क्वचिदिति। ताम्बूलाक्तः ताम्बूलजन्यरागोचितः। अगरु कालागरु, अङ्कं चिह्नम्। चूर्णानि गन्धद्रव्यविशेषानुद्गिरति निष्ठीवतीति सः। पदं चिह्नम्। वलीभिस्त्रिवलीभिः कृता ये भङ्गा निम्नानि तेषामाभोगैः परिपूर्णताभिः। अलकेभ्यः केशेभ्यः पतितैः स्खलितैः शीर्णकुसुमैः उपमर्दितपुष्पैश्चोपलक्षितः। सर्वावस्थं सर्वप्रकारम्, कथयति सूचयति प्रच्छदपटः।

भावोन्नता यथा—

'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै
रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्॥'

स्वल्पव्रीडा यथा—

'धन्यासि या कथयसि—' इत्यत्रैव।

आक्रान्तनायका यथा—

'स्वामिन्भङ्गुरयालकं, सतिलकं भालं विलासिन्कुरु,

प्राणेश त्रुटितं पयोधरतटे हारं पुनर्योजय।
इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम् ॥'

मध्याप्रगल्भयोर्भेदान्तराण्याह—

ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे।

ते मध्याप्रगल्भे॥

तत्र—

प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ॥६१॥
धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः।

तत्र मध्या धीरा यथा—

'तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥'*

टीका—। मधुरेति—कृतानि अङ्गुलितर्जनानि यत्र तैः। रभसरचितैः हर्षकृतैः। महोत्सवस्य बन्धुभिः जनकैः। स्फारस्फारैः अतिदीर्घैः॥ स्वामिन्निति—भङ्गुरय भङ्गयुक्तं कुरु। त्रुटितं छिन्नम्। तेन स्वामिना। मोहनं सुरतसुखादिज्ञानम्॥ 'मध्या' इति स्थानत्रयेऽन्वेति। सोत्प्रासवक्रोक्त्या सपरिहासश्लिष्टवचनेन। दहेत् संतापयेत्। तदिति। अवितथं सत्यम्। इति उपहासः। उत्तरत्र द्रष्टव्यम्।

मध्यैव धीराधीरा यथा—

'बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान्, सर्वेऽपराधा मयि।

तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥

इयमेवाधीरा यथा—

'सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति नहि कश्चिदिहावकाश-
स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥'

प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ॥ ६२ ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ।

तत्र प्रिये ( इत्यर्थः ) ।

यथा—

'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः । (२)

( See next )

टीका—* मण्डनश्रीः भूषण शोभा। वल्लभा प्रिया, तत्कर्ट कालोकनेन। अत्र अवितथमिति मिथ्या, यद यस्मात् मम तापाय प्रतिनायिकापरिहितवस्त्रं परिधाय मम गेहमागाः। यद्यहं ते प्रिया स्यां तदा मत्तापजनकं कर्म न कुर्याः। एततावत् मण्डनं न भवति। यदि तवैतन्मण्डनं तदा तज्जन्यशोभां या प्रिया भवति तामेवावलोकय। ममालोकनया किं प्रयोजनमिति एवात्र वक्रोक्तिः॥ बाले इति। नायकस्य नायिकायाश्चोक्तिप्रत्युक्तिरूपः श्लोकोऽयम्। खेदोऽस्मासु कृत इत्यन्वयः। भवत-स्तावदपराधी नास्मि। मम रुषा कथं खेद इत्यभिप्रायेणाह—का तवेति, दयिता प्रियाभार्या। नास्मीति। अहं न दयिता। प्रेमपात्रमित्यर्थः। इयमेव मध्येव॥ सार्धमिति। कृत्रिमेण स्वाभाविकेतरेण हावेन भावविशेषेण रम्या मनोरमा। इह=तव मनसि।

कृतं = न प्रयोजनम्। चरणपातेन विडम्बनाभिर्विंद्रावैः॥ प्रगल्भेति। कृता संवृता कोपाकृतिः कोपसूचको मुखरागादिर्यया। उदास्ते उदासीना अनुरागहीना भवति। बहिर्बाह्यात् आदरात् न त्वाभ्यन्तरात्। तल्पे ति विवृणोति, प्रिये इति। एकत्रे ति। एकस्मिन्नासने आसनसंस्थितिः उपवेशनसंबन्धः। (२) रभसाश्लेषो हर्षालिङ्गनम्।

* आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके

कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥'

धीराधीरा तु सोल्लुण्ठभाषितैः खेदयत्यमुम् ॥ ६३ ॥

अमुं नायकम्।

यथा मम—

'अनलंकृतोऽपि सुन्दर हरसि मनो मे यतः प्रसभम्।

किं पुनरलंकृतस्त्वं संप्रति नखरक्षतैस्तस्याः॥'

तर्जयेत्ताडयेदन्या

अन्या अधीरा। यथा—'शोणं वीक्ष्य मुखं—' इत्यत्र। अत्र च सर्वत्र 'रुषा' इत्यनुवर्तते।

प्रत्येकं ता अपि द्विधा।

कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥६४॥

ता अनन्तरोक्ताः षड्भेदा नायिकाः।

यथा—

'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-

देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः।

ईषद्वक्रितकंधरः सपुलकः प्रेमोल्लसन्मानसा-

मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति॥

टीका—न मिश्रितः नोत्तरेण युक्तः कृतः। व्यापारयन्त्या नायकपरिचयात् सव्यापारीकुर्वत्या। अन्तिकी इति। विजनत्वाभावोपपत्तये उपचारतः प्रीतिहेतुव्यापारान् विधाय। कोप इति—संभोगप्रतिरोधः क्रोधस्य फलम्। तेनैव कान्तो वशीकृत इति भावः॥ प्रियवल्लासमानमप्रियं भाषितं सोल्लुण्ठनम् स्मृतम्। अनलंकृत इति—किं पुनरिति—किमुतेत्यर्थः। तस्याः प्रतिनायिकायाः॥ श्रोणमित्यादि धृष्टनायकोदाहरणे उक्तम्। सर्वत्र=लक्षणपञ्चके॥ दृष्ट्वेति। प्रियतमे भार्ये। एकस्याः स्वल्पप्रणयनायिकायाः। विहितः क्रीडायामनुबन्ध आरम्भः स एव फलं यस्य।

मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्तिताः।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश॥ ९५॥
परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।

तत्र—

यात्रादिनिरतान्योढा कुलटा गलितत्रपा॥ ९६॥

यथा—

'स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः,
श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः।
तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते,
वैदग्धीमधुरप्रबन्धरसिक, व्यर्थोऽयमत्र श्रमः॥'

अत्र हि मम परिणीतान्नाच्छादनादिदातृतया स्वाम्येव। न तु वल्लभः। त्वं तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते।

टीका—यात्रादीति—उत्सवादीत्यर्थः। कुलटा परभर्तृगामिनी॥ स्वामीति। निःश्वसिते सतीत्यर्थः। निःश्वसितेन प्रच्छन्नकामुकाप्राप्तिदुःखमनुमाय स्वामी मह्यमीर्ष्यतीति भावः। मनसो घ्राणजप्रत्यक्षासंभवेन अभिप्रायवेदने लक्षणा,

मनोजिघ्रः भावज्ञ इत्यर्थः। अयम्ः इङ्गितमभिप्रायसूचकचेष्टाविशेषः, तद्वेवतं तदभिज्ञा। ईहालिङ्गचेष्टाविशेषसूचनीयार्थाभिज्ञाः यातरः पतिभ्रातुः पत्न्यः। वैदग्ध्या मधुरो मनोहरः प्रबन्धः सुरतप्रयोगस्तस्य रसयुक्तः। यद्वा, वैदग्ध्या मधुरः प्रबन्धो यस्य तत्संबोधने तथा। 'अत्र' स्वाम्यायाकीर्णे देशे तव मम मत्प्राप्तिसाधनव्यापारः व्यर्थः। ननु स्वप्राप्तिसाधनव्यर्थत्वकथनेनास्याः परनायकरत्यभावः प्रतीयते तेन च कुलटात्वाभाव एव इति कथमस्याः परनायिकात्वमत आह—अत्र हीति। परिणीता विवाहकर्ता। एतदुपलक्षणम्। 'अधुना'-'अत्र'-पदाभ्यामपि कालान्तरे देशान्तरे च असामर्थ्यकत्वव्यञ्जनेनापि रतिः प्रतीयत इति।

कन्या त्वजातोपयमा सलज्जा नवयौवना।

अस्याश्च पित्राद्यायत्तत्वात्परकीयात्वम्। यथा मालतीमाधवादौ मालत्यादिः।

धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥ ६७ ॥

निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।

वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥ ६८ ॥

टीका—अजातोपयमा अजातविवाहा। उदाहरणान्तरं तु नैषधीयचरिते यथा—'अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम्। ईष्टे तनूजन्मतनोः स नूनं मत्प्राणनाथस्तु नलस्तथापि॥" अत्र विवाहात्पूर्वं दमयन्त्या नलानुरागः॥ इदानीं साधारणस्त्रियमाह—धीरेति। सुरतपण्डितेत्यर्थः। कला नृत्यगीतादयः चतुःषष्टिकला, तत्र प्रगल्भा अतिनिपुणा।

काममङ्गीकृतमपि परिक्षीणधनं नरम्।

माता निष्कासयेदेषा पुनः संधानकाङ्क्षया ॥ ६९ ॥

टीका—काममत्यर्थमङ्गीकृतं वल्लभत्वेन स्वीकृतम् अपि। एषा माता गृहीतोपकरणद्रव्यं निःसारयेद् बाहयेत्। संधानं = सुरतार्थं संनिधानम्।

तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥ ७० ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥

पण्डको वातपाण्ड्वादिः ( नपुंसकः )। छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः। तत्र रागहीना यथा—लटकमेलकादौ मदनमञ्जर्यादिः। रक्ता यथा—मृच्छकटिकादौ वसन्तसेनादिः।

पुनश्च—

अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।
स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका ॥ ७२ ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥ ७३ ॥

[ N. B.—13 स्वीया, 2 परकीया, one साधारणी constitute 16 Nayika ; 16×8 ( due to अवस्था )=128 ]

तत्र—

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।
विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ॥ ७४ ॥

यथा—'अस्माकं सखि वाससी—' इत्यादि ।

पार्श्वमेति प्रियो यस्या अन्यसंभोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥७५॥

यथा—'तदवितथमवादीः—' इत्यादि ।

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ॥ ७६ ॥

क्रमाद्यथा—

'न च मेऽवगच्छति यथा लघुतां करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥'

'उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥'

टीका—सुखेन अनायासेन प्राप्तं धनं येभ्ये। लिङ्गिनस्तपस्विवेषधारिणः। आसां वेश्यानाम् ॥ एषा वेश्यापि ॥ ईर्ष्याकषायिता ईर्ष्यया कलुषीकृतचित्ता। अभिसारिकापदस्य व्युत्पत्तिलभ्यमर्थद्वयमेव लक्षणद्वयमाह—अभिसारयत इति ॥ न चेति। स कान्तः अभिदूति अभिमुखागतां दूतीं प्रति संदिदिशे वाचिकं न्यस्तवती ॥ उत्क्षिप्तम् ऊर्ध्वं न्यस्तम्। एतेन तयोः शब्दप्रतिरोधः। प्रतिपादिता कृता। तिमिरमेव अवगुण्ठनपटः आच्छादनवस्त्रं तस्य क्षेपं निरासम् विधत्ते।

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा
अवगुण्ठनसंवीता कुलजाभिसरेद्यदि ॥ ७७ ॥
विचित्रोज्ज्वलवेषा तु रणन्नूपुरकङ्कणा ।
प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ॥ ७८ ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा स्यात्प्रेष्याभिसरेद्यदि ॥ ७९ ॥

तत्राद्ये 'उत्क्षिप्तं—' इत्यादि। अनयोरूह्यमुदाहरणम् ।

प्रसङ्गादभिसारस्थानानि कथ्यन्ते—

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम्।
मालापञ्चः श्मशानं च नद्यादीनां तटी तथा॥ ८०॥

टीका—प्रसङ्गादभिसरणक्रममाह—संलीनेति। गात्रेषु अङ्गेषु, संकुचितसर्वाङ्गीत्यर्थः। अवगुण्ठनेन आच्छादनपटेन संवीता संवृतदेहा, एतदुपलक्षणम्, अनुलेपादिनापि संवीता। तत्रान्धकारे नीलवस्त्रकुसुमकस्तूरिकासंवीता। ज्योत्स्नायां चन्दनद्रवसंवीता। क्रमेण यथा—'सितं वसनमर्पितं वपुषि नीलचेलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः। करेण परिबोधितः स्वजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली॥' 'मल्लिकामाल्यभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः। क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥' आविद्धः उद्घावितः पत्युः सद्भावो यया। 'आविद्धगतिसंचारा' इति पाठे आविद्धया उद्धतया गत्या संचारः संकेतस्थानप्राप्तिर्यस्याः सेत्यर्थः॥ आद्ये कुलजाभिसरणप्रकारे। अनयोर्वेश्याप्रेष्याभिसरणप्रकारयोः। तत्र क्रमेणोदाहरणम्। यथा मम—'कामिषु वेधविधुरं धुरि दत्तचित्तं शिञ्जानमञ्जुमणिनूपुरकिङ्किणीका। मन्दं बृहत्कुचनितम्बभरेण दूरादाश्वासयत्यभिसरत्यत कापि धन्यम्॥', 'कान्तं तमेकान्तगुणाभिरामं मदोहिताधानविवृद्धकामम्। प्राप्यापमोदं विदधे सखीति ब्रुवत्यभीष्टं प्रमदाभियाति॥' अत्र 'संमोदम्' इति वक्तव्ये 'अपमोदम्' इति संलापस्खलनम्॥ मालापञ्चः पुष्पोद्यानम्।

एवं कृताभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये॥ ८१॥

चाटुकारमपि प्राणनाथं रोषादपास्य या।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा॥ ८२॥

यथा मम तातपादानाम्—

'नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
  कान्तस्य प्रियहेतवो निजसखीवाचोऽपि दूरीकृताः।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
  पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः॥

प्रियः कृत्वापि सङ्केतं यस्या नायाति संनिधिम्।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता॥ ८३॥

यथा—

'उत्तिष्ठ दूति यामो यामो यातस्तथापि नायातः।
यातः परमपि जीवेज्जीवितनाथो भवेत्तस्याः॥'

टीका—विनोदने प्रति = सुरतोत्सवायेत्यर्थः। कुत्रचिदाश्रये। पुंश्चल्योऽभिसरन्ति इति शेषः। 'आश्रयः' इति प्रथमान्तपाठे ध्वान्तच्छन्ने कुत्रचिद्देशे आश्रयोऽधिष्ठानं पुंश्चलीनां विनोदे भवतीत्यर्थः। चाटुं प्रियोक्तिं करोतीति चाटुकारः तम्॥ हारो नायकेन प्रसादाय दीयमानो मुक्ताकलापः॥ यामः संकेतकालः। यामः कालः यातः गतः।

नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः।
सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका॥ ८४॥

यथा—

'तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
  दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढोत्कण्ठां गुरुषु दिवसेषु गच्छत्सु बालां
  जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्॥'
(Megha)

कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
सा तु वासकसज्जा स्याद्विदितप्रियसंगमा ॥ ८५ ॥

यथा राघवानन्दानां नाटके—

'विदूरे केयूरे कुरु, करयुगे रत्नवलयै-
रलं, गुर्वी ग्रीवाभरणलतिकेयं, किमनया ।
नवामेकामेकावलिमयि मयि त्वं विरचये-
र्न नेपथ्यं पथ्यं बहुतरमनङ्गोत्सवविधौ ॥'

आगन्तुं कृतचित्तोऽपि दैवान्नायाति चेत्प्रियः ।
तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥ ८६ ॥

टीका—तां जानीया इति। कुबेरशापात्प्रोषितस्य यक्षस्य मेघं प्रत्युक्तिरियम्। पद्मिनीं वेति वाशब्द इवार्थः। 'वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये' इति विश्वप्रकाशः। कुरुत इति—सखो इति शेषः। सज्जिते शय्याप्रदीपादिभिः परिष्कृते। विदूरे इति—मण्डयन्तीं सखीं प्रति कस्यचिदुक्तिरियम्। नवां नवगुम्फिताम्। अन्यथा परिरम्भभरेण झटिति त्रुटिता स्यात्। बहुयष्टिकहारस्य परिरम्भातिविघ्न-हेतुत्वादाह—एकावलिमिति। एकयष्टिकहारमित्यर्थः। चेत्प्रिय इति यस्याः प्रिय इत्यर्थः। तदनागमेति—प्रियानागमनेन आर्त्ता।

यथा—

'किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किंवा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥'

इति साष्टाविंशतिशतमुत्तममध्याधमस्वरूपेण ।
चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदाः ॥ ८७ ॥

'इह च परस्त्रियौ कन्यकान्योढे संकेतात्पूर्वं विरहोत्कण्ठिते। पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके। कुतोऽपि संकेतस्थानमप्राप्ते नायके विप्रलब्धे। इति अवस्थैवानयोः। अस्वाधीनप्रिययोरवस्थान्तरायोगात्।' इति कश्चित्।

क्वचिदन्योन्यसांकर्यमासां लक्ष्येषु दृश्यते।

यथा—

'न खलु वयममुष्य दानयोग्याः पिबति च पाति च यासकौ रहस्त्वाम्।
विट विटपममुं ददस्व तस्यै भवति यतः सदृशोश्चिराय योगः॥'

टीका—अनयोः परस्त्रियोः। अवस्थान्तरायोगादिति प्रकारासंभवादिति भावः। तथाहि—परस्त्रियाः पार्श्वे नायकस्य सततमवस्थानायोगान्न स्वाधीनभर्तृकात्वम्। नायिकान्तरसंभोगेन ईर्ष्याया असंभवान्न खण्डितात्वम्। नायिकान्तरसंभोगदोषात्कान्तत्यागासंभवेन न कलहान्तरितात्वम्। कान्तस्य दूरदेशगमनेन मनोभवदुःखार्तत्वाभावान्न प्रोषितभर्तृकात्वम्। परालोकनशङ्कया सज्जितवासवेश्मनि मण्डनासंभवान्न वासकसज्जात्वम्। तथा चानयोस्त्रैविध्येन षडेव भेदाः। न त्वष्टविधत्वं न षोडशेति। तत्र चतुरशीत्यधिकशतत्रयसंख्या नोपपन्नेति भावः। 'अस्वाधीनप्रिययोः' इत्युपदर्शनमात्रम्। आसामुपदर्शितप्रकाराणां नायिकानाम्। लक्ष्येषु महाकविप्रयोगेषु॥ न खल्विति। सपुष्पपल्लवां वृक्षशाखां प्रियायै यच्छन्तं नायकं प्रति नायिकाया उक्तिरियम्। अमुष्य विटपस्य। पिबति चुम्बति। पाति योषिदन्तरेभ्यो वारयति। हे विट हे षिङ्ग कामुक। विटपं सपुष्पमालां शाखाम्। सदृशोरिति। विटं त्वां पिबति पाति वेति व्युत्पत्तिद्वयेन सैव विटपा अयमपि विटप इति सदृशयोः तुल्ययोर्योगो योग्यो भवतीत्यर्थः।

'तव कितव किमाहितैर्वृथा नः क्षितिरुहपल्लवपुष्पकर्णपूरैः।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम्॥'

'मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम्।
वसतिमुपगतेन धाम्नि तस्याः शठ कलिरेष महांस्त्वयाद्य दत्तः॥'
'इति गदितवती रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च॥'

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताडनेन च धीरमध्याधीरमध्याधीरप्रगल्भताभिः संकीर्णा। एवमन्यत्राप्यूह्यम्।

इतरा * अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ॥ ८८ ॥

ता नायिकाः।

टीका—भवद्व्यलीकैर्भवतोऽप्रियवचनैः॥ स्फुरितो मनोरमः पक्ष्मवत्केसरो यस्य तेन। चक्षुःपक्षे—पक्ष्मैव केसरो यस्य तेन। वक्रोक्त्येति। विटशब्दस्य नानार्थकल्पनाविचित्रोक्त्येत्यर्थः। * इतरा अपि पद्मिनीहस्तिनीप्रभृतयः।

अथासामलंकाराः—

यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः।
अलंकारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥ ८९ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता।
औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ॥ ९० ॥
लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ९१ ॥
विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्।
हसितं चकितं केलिरित्यष्टादशसंख्यकाः ॥ ९२ ॥

स्वभावजाश्च, भावाद्या दश पुंसां भवन्त्यपि ।

पूर्वे भावादयो धैर्यान्ता दश नायकानामपि संभवन्ति । किन्तु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति ।

सित—। नायिका निरूप्य कार्यत्वसंगत्या तदलंकारं निरूपयति—अथेति । तासां नायिकानाम् इत्यर्थः । अलंकाराणामङ्गजत्वायत्नजत्वस्वभावजत्वैस्त्रैविध्यं दर्शयन्नुद्देशं करोति—शोभेति । 'भवन्त्यपि' इत्यपिशब्दस्य योजनां दर्शयति—पूर्वं इति ।

तत्र भावः—

निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ ८३ ॥

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः ।

यथा—

'स एव सुरभिः कालः स एव मलयानिलः ।
सैवेयमबला किंतु मनोऽन्यदिव दृश्यते ॥'

अथ हावः—

भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः ।
भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ॥ ८४ ॥

यथा—

'विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥'

अथ हेला—

हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु ।

स एव भाव एव ।

यथा—

'तह से झत्ति पउत्ता वहुए सव्वङ्गविब्भमा सअला ।
संसइअमुद्धभावा होइ चिरं जह सहीणं वि ।'

टीका— विच्छित्तिविशेषं विलक्षणवैचित्र्यम् । प्रथमविक्रिया संभोगेच्छायाः प्रथम प्रकृतिविपर्यासः । उद्बुद्धभावः, न तु स्फुटं प्रतीयमानः । एतेन हावहेलालक्षणाति व्याप्तिर्वारिता । कौमारे चाञ्चल्यादिरहितानां भ्रूनेत्रादीनां चाञ्चल्यादिरूपप्रकृतिविपर्य- सैरल्पसंलक्ष्यविकारः ईषल्लक्ष्यस्वभावः । एतेन हेलालक्षणातिव्याप्तिर्वारिता । विवृण्वते प्रकटयन्तो । साचीकृता वक्रीकृता । पर्यस्तविलोचनेन शिवे परिक्षिप्तनेत्रेण । बालक- दम्बेत्यनेन पुलकस्याल्पत्वं प्रतीयते । तह से इति । 'तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः । संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि ॥'

अथ शोभा—

रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ॥ ८५ ॥
शोभा प्रोक्ता ।

तत्र यौवनशोभा यथा—

'असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥'

एवमन्यत्रापि ।

अथ कान्तिः—

सैव कान्तिर्मन्मथाप्यायितद्युतिः ।
मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।
यथा—'नेत्रे खञ्जनगञ्जने—' इत्यादि ।

अथ दीप्तिः—

कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ ८६ ॥

यथा मम चन्द्रकलानाम्नाटिकायां चन्द्रकलावर्णनम्—

'तारुण्यस्य विलासः समधिकलावण्यसंपदो हासः ।

धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥'

टीका—। लालित्यमङ्गानां सुकुमारत्वम् । भोगः स्रक्चन्दनादिजनितसुखानुभवः । आद्यशब्देन अलंकारादिग्रहणम् । तारुण्यस्येति । अत्र तारुण्यविलासादीनामतिशयो दीप्तिः ।

अथ माधुर्यम्—

सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ।

यथा—

'सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥'

अथ प्रगल्भता—

निःसाध्वसत्वं प्रागल्भ्यम्

यथा—

'समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥'

अथौदार्यम्—

औदार्यं विनयः सदा ॥ ९७ ॥

यथा—

'न ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं

नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभि प्रयच्छति परं पर्यश्रुणी लोचने॥'

टीका—। सरसिजमिति। शकुन्तलाया वल्कलधारणेऽपि शोभातिशयमनुभवतो दुष्यन्तस्य स्वयं परामर्शोऽयम्। अनुविद्धं व्याप्तम्। लक्ष्मीं शोभाम्॥ समाश्लिष्ट इति। दन्तेनाधरादिखण्डनं दंशनम्॥ उत्तंसं कर्णभूषणम्। गर्भगृहे वासगृहाभ्यन्तरे। गवाक्षविवरेण व्यापारितं संचारितमक्षि ययातस्याः। अभि लक्षीकृत्य लोचने प्रयच्छति।

अथ धैर्यम्—

मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला।

यथा—

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किंवा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया।
कुलममलिनं न त्वेवायं जनो न च जीवितम्॥'

अथ लीला—

अङ्गैर्वेषैरलंकारैः प्रेमिभिर्वचनैरपि॥ ९८॥
प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः।

यथा—

'मृणालव्यालवलया वेणीबन्धकपर्दिनी।
हरानुकारिणी पातु लीलया पार्वती जगत्॥'

अथ विलासः—

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् ॥ ९८ ॥

विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ।

टीका—। ज्वलत्विति। ज्वलतु सतापः सन् दीप्यताम्। 'परित' इत्यव्ययमधिकार्थे। 'शाघ्यः' इति काकाक्षिगोलकन्यायेन उभयत्रान्वेति। यद्वा 'अमलान्वया' इति लिङ्गव्यत्ययेनान्वयः। न त्वेवायं जनः स्थिर इति शेषः॥ मृणालमिव व्यालः सर्पो वलयं यस्याः, वेणीबन्ध एव कपर्दो जटाजूटो यस्याः।

यथा—

'अत्रान्तरे किमपि वाग्विभवातिवृत्त-

वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः।

तद्भूरिसात्त्विकविकारमपास्तधैर्य-

माचार्यकं विजयि मान्मथमाविरासीत् ॥'

अथ विच्छित्तिः—

स्तोकाप्याकल्परचनाविच्छित्तिः कान्तिपोषकृत् ।

यथा—

'स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-

स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।

वासस्तु प्रतनु विविक्तमस्त्वितीया-

नाकल्पो यदि कुसुमेषुणा न शून्यः ॥'

अथ विव्वोकः—

विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ १०० ॥

टीका—। अत्रान्तरे नायकसंदर्शनादिसमये। वाग्विभवमतिवृत्तमतिक्रम्य स्थितं वैचित्र्यं गमनादिचातुरी यस्मात्तत्। ते प्रसिद्धाः भूरिसात्त्विकविकाराः स्तम्भादयो

यस्मात्तत्। आचार्यकमुपाध्यायकर्म उपदेश इत्यर्थः॥ लीका आकल्परचना वेषविन्यासः। प्रतनु अतिसूक्ष्मम्। विविक्तं विमलम्। यासामिति।

यथा—

'यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
या प्राणान्वरमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते॥'

अथ किलकिञ्चितम्—

स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्।
सांकर्यं किलकिञ्चितमभीष्टतमसंगमादिजाद्धर्षात्॥ १०१॥

यथा—

'पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितं च सुखेऽपि॥'

अथ मोट्टायितम्—

तद्भावभाविते चित्ते वल्लभस्य कथादिषु।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्॥ १०२॥

यथा—

'सुभग त्वत्कथारम्भे कर्णकण्डूतिलालसा।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि माङ्गना॥'*

टीका—कामिनं प्रति सख्युराशीर्वचनमिदम्। सद्गुणानामनुसरणे परेरुद्भावने दोषाणामनुवृत्तिः स्वयं पुनः पुनरुद्भावनम्। सांकर्यं मेलनम्। पाणिरोधं वस्त्रक्षेपणादिप्रवृत्तनायककरप्रतिबन्धम्। हारि मनोहरम्। कारणं विना रुदितं शुष्करुदितम्। सुखेऽपि सुखसमयेऽपि।

अथ कुट्टमितम्—

केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात्।

आहुः कुट्टमितं नाम शिरःकरविधूननम्॥ १०३॥

यथा—

'पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।

पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण॥'

अथ विभ्रमः—

त्वरया हर्षरागादेर्दयितागमनादिषु।

अस्थाने विभ्रमादीनां विन्यासो विभ्रमो मतः॥ १०४॥

यथा—

'श्रुत्वायान्तं बहिः कान्तमसमाप्तविभूषया।

भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः॥'

टीका—'कर्णकण्डूयनादिभिः' इति पाठभेदे तृतीया। आदिना जृम्भाङ्गभङ्गादि। *कर्णकण्डूतिलालसा कर्णकण्डूयनतत्परा। पल्लवोपमित्या यत्साम्यं तेन सपक्षं सखायम्। अभीष्टे नायके। पर्यकूजि महाशब्दः कृतः। शब्दोपयोगित्वं दर्शयति—तारेति। तारमतिशयं लोलं चपलं वलयं कङ्कणं यत्र तेन। सरुजुर्दंशने व्यथा भवतीति भावः। त्वरयेति। हर्षादिजन्यत्वरयेत्यर्थः। तत्र प्रथमेनादिपदेन उत्सवादेः, द्वितीयादिपदेन दयिताभिसरणादेः, तृतीयेन लाक्षादिग्रहणम्। असमाप्तविभूषया कान्तया।

अथ ललितम्—

सुकुमारतयाङ्गानां विन्यासो ललितं भवेत्।

यथा—

गुरुतरकलनूपुरानुनादं सललितनर्तितवामपादपद्मा।

इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम॥'

अथ मदः—

मदो विकारः सौभाग्ययौवनाद्यवलेपजः ॥ १०५ ॥

यथा—

मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति ।
अन्यापि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥'

अथ विहृतम्—

वक्तव्यकालेऽप्यवचो व्रीडया विहृतं मतम् ।

टीका—विन्यासोऽप्रचण्डविक्षेपः । प्रथमपादः क्रियाविशेषणार्थकः । इतरत् दक्षिणम् । अनतिलोलमनतिचञ्चलम् । यौवनादीत्यादिपदेनाऽहंकारादेर्ग्रहणम् । मा गर्वमिति । 'मम कपोलतले' इत्यन्वयः । ईदृशीनां मञ्जरीणाम । वैरी शत्रुरिव । तव तावत्कपोलतले एकैव मञ्जरी यद्दन्यापि भवितुमर्हति, तेन सौभाग्यातिशयो न नियमतः प्रतीयत इति । गर्वो नौचित एव । ईदृशीनामिति बहुवचनेन सौभाग्यातिशयः सूचितः ।

यथा—

'दूरागतेन कुशलं पृष्टा नोवाच सा मया किंचित् ।
पर्यश्रुणी तु नयने तस्याः कथयांबभूवतुः सर्वम् ॥'

अथ तपनम्—

तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितम् ॥ १०६ ॥

यथा मम—

'श्वासान्मुञ्चति, भूतले विलुठति, त्वन्मार्गमालोकते,

दीर्घं रोदिति, विक्षिपत्यत इतः क्षामां भुजावल्लरीम् ।
किंच, प्राणसमान, काङ्क्षितवती स्वप्नेऽपि ते संगमं
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥'

अथ मौग्ध्यम्—

अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः ।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १०७ ॥

यथा—

'के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः ।
नाथ मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥'

टीका—सर्वमिति । मम प्रवासे दुःखातिशयमागमने हर्षातिशयं चेत्यर्थः । स्मरवेगोत्थेति । कामोद्वेगजनितेत्यर्थः । श्वासानिति । प्रवासिनं प्रति सख्युक्तिरियम् । हे प्राणसमान, दग्धो निर्दयः । तां निद्राम् ॥ तेषां द्रुमाणां फलमित्यन्वयः ।

अथ विक्षेपः—

भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम् ।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १०८ ॥

यथा—

'धम्मिल्लमर्धमुक्तं कलयति तिलकं तथासकलम् ।
किंचिद्वदति रहस्यं चकितं विष्वग्विलोकते तन्वी ॥'

अथ कुतूहलम्—

रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।

यथा—

'प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।

उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥'

( Rag & Kum )

अथ हसितम्—

हसितं तु वृथाहासो यौवनोद्भेदसंभवः ॥ १०९ ॥

यथा—

'अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति ॥'

अथ चकितम्—

कुतोऽपि दयितस्याग्रे चकितं भयसंभ्रमः ।

टीका—मिथ्या अकारणम् । विष्वग् सर्वतः । धम्मिलम् बद्धकेश समूहः । लोलता सत्वरत्वम् । प्रसाधिका मण्डनकर्त्री, तया आलम्बितं धारितम् । द्रवरागमयुक्तलाक्षारसम् । अलक्तकाङ्कां लाक्षाचिह्नाम् । पदवीं पन्थानम् । अत्र हरदर्शनाय कस्याश्चिद्रागातिशयः कुतूहलम् । यौवनोद्भेदो यौवनोत्पत्तिः । अकस्मात्कारणं विना । स्वाराज्यं स्वर्गवदधिकारम् । अधितिष्ठति कुरुते । कुतोऽपीति अलक्षितकारणादित्यर्थः । भयसंभ्रमः भयेनातिचाञ्चल्यम् ।

यथा—

'त्रस्यन्ती चलशफरीविघट्टितोरू-
र्वामोरूरतिशयमाप विभ्रमस्य ।
क्षुभ्यन्ति प्रसभमहो विनापि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः ॥'

अथ केलिः—

विहारे सह कान्तेन क्रीडितं केलिरुच्यते ॥ ११० ॥

यथा—

'व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मना: प्रियं जघानोन्नतपीवरस्तनं ॥'

अथ मुग्धाकन्ययोरनुरागेङ्गितानि—

दृष्ट्वा दर्शयति व्रीडां संमुखं नैव पश्यति।
प्रच्छन्नं वा भ्रमन्तं वातिक्रान्तं पश्यति प्रियम् ॥१११॥

बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी।
सगद्गदस्वरं किंचित्प्रियं प्रायेण भाषते ॥११२॥

अन्यैः प्रवर्तितां शश्वत्सावधाना च तत्कथाम्।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥११३॥

टीका—क्षुभ्यन्ति भयव्याकुला भवन्ति। किमु सुतरामित्यर्थः। विहारे इति। कान्तेन सह क्रियमाणे विहारे सति यन्नायिकायाः क्रीडितं स केलिरित्यर्थः। व्यपोहितुं निरसितुम्। अपारयन्तमशक्नुवन्तम्॥ अनुरागेङ्गितानि अनुरागसूचकचेष्टितानि। प्रच्छन्नं भित्त्यादिव्यवहितम्। अतिक्रान्तं दूरं गच्छन्तम्।

अथ सकलानामपि नायिकानामनुरागेङ्गितानि—

चिराय सविधे स्थानं प्रियस्य बहु मन्यते।
विलोचनपथं चास्य न गच्छत्यनलंकृता ॥११४॥

कापि कुन्तलसंव्यानसंयमव्यपदेशतः।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥११५॥

आच्छादयति वागाद्यैः प्रियस्य परिचारकान्।
विश्वसित्यस्य मित्त्रेषु बहु मानं करोति च ॥११६॥

सखीमध्ये गुणान्ब्रूते स्वधनं प्रददाति च।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥११७॥
स्थिता दृष्टिपथे शश्वत्प्रिये पश्यति दूरतः।
आभाषते परिजनं संमुखं स्मरविक्रियम् ॥११८॥
यत्किंचिदपि संवीक्ष्य कुरुते हसितं सुधा।
कर्णकण्डूयनं तद्वत्कबरीमोक्षसंयमौ ॥११९॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति।
भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ॥१२०॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥१२१॥

( कुन्तलेति—केशसमूहबन्धनच्छलेनेत्यर्थः। आच्छादयति वशीकरोति। वाक् प्रियवचनम्। आदापदादन्नवस्त्रादिदानानां ग्रहणम्। अस्य प्रियस्य। )

आगच्छति गृहं तस्य कार्यव्याजेन केनचित् ॥१२२॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते।
दत्तं किमिव कान्तेन धृत्वाङ्गे मुहुरीक्षते।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥१२३॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम्।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्तते ॥१२४॥
विकारान्सात्त्विकानस्य संमुखी नाधिगच्छति।
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥१२५॥
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ॥१२६॥

अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ।

दिङ्मात्रं यथा मम—

'अन्तिकगतमपि मामियमनालोकयतीव हन्त दृष्ट्वापि ।

सरसनखक्षतलक्षितमाविष्कुरुते भुजामूलम् ॥'

यथा—

लेखाप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ॥१२७॥

टीका—। तद्योगि प्रियसंगमि। तच्छीलं प्रियचरितम्। तत्प्रियाभीष्टं वस्तु। प्रार्थयतीति परस्मैपदम्, आत्मनेपदस्य प्रायिकत्वात्। अधिगच्छति प्रकाशयति। सूनृतं प्रियसत्यवचनम्। स्निग्धां वयस्याम्। 'स्निग्धम्' इति पाठे स्नेहव्यञ्जकं यथा स्यात्तथा भाषत इत्यर्थः। सरसनखक्षतेन आर्द्रनखाघातेन लक्षितं चिह्नितम्। लेख्यप्रस्थापनं यथा—'विज्ञतिरेषा मम जीवबन्धो तवैव नेया दिवसा कियन्तः।'

दूतीसंप्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते ।

दूत्यश्च—

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ॥१२८॥

बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ।

कारू रजकीप्रभृतिः। शिल्पिनी चित्रकारादिस्त्री। आदिशब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः।

तत्र सखी यथा—'श्वासान्मुञ्चति'—इत्यादि ।

स्वयंदूती यथा मम—

'पन्थिअ पिआसिओ विअ लच्छीअसि जासि ता किमसत्तो ।

ण मणापि वारओ इध अत्थि घरे घणरसं पिअन्ताणम् ॥'

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।

दूतीगुणानाह—

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ॥१२९॥

माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।

एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥१३०॥

एता दूत्यः ( अपि ) ।

टीका—पन्थिश्च इति । 'पान्थ पिपासित इव लक्ष्यसे यासि तत्किमन्यत्र । न मनागपि वारक इहास्ति गेहे घनरसं पिबताम् ॥' इति संस्कृतम् । पिपासा जलतृष्णा । पक्षे—संभोगेच्छा । घनरसं जलम् । पक्षे—संभोगसुखम् । पिबतामनुभवताम् । यद्वा घनो निबिडो रसो रागो यत्र सोऽधरस्तम् ॥ एता अनन्तरोक्ताः सख्यादयः । तद्गुणाः दूतीगुणाः । वाग्मीति—एकगकारः भाष्यकारस्य, द्विगकारः हरदत्तस्य ।

अथ प्रतिनायकः—

धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ।

यथा—रामस्य रावणः ॥

अथोद्दीपनविभावाः—

उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥१३१॥

ते च—

आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ।

चेष्टाद्या इत्याद्यशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दाच्चन्द्रचन्दनकोकिलालापभ्रमरझंकारादयः ।

तत्र चन्द्रोदयो यथा मम—

'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।

विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥'*

यो यस्य रसस्योद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते ।

व्यसनं द्विविधं कामजं कोपजम् । तद्योगाद् व्यसनी । व्यसनान्याह मनुः—'कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ मृगयाक्षो दिवा स्वप्नः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥" अक्षो द्यूतक्रीडा । तौर्यत्रिकं नृत्यगीतवाद्यानि त्रीणीति दश । पैशुन्यम् अविज्ञातपरदोषाविष्करणम् । साहसं साधोर्बन्धनादिना निग्रहः । द्रोहो जिघांसा । ईर्ष्या परगुणासहिष्णुता । असूया परगुणेषु दोषाविष्करणम् । अर्थदूषणम् अर्थानामपहरणम्, देयानामदानं च ॥ उद्दीपयन्ति परिपोषातिशयं नयन्ति । आलम्बनस्य नायिकादेः । चेष्टा नेत्रविक्षेपादिः ।

अथानुभावाः—

उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ॥१३२॥

लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ।

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपन-कारणैरामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन्कार्यमित्युच्यते, स काव्यनाट्ययोः पुनरनुभावः ।

कः पुनरसावित्याह—

उक्ताः स्त्रीणामलंकारा अङ्गजाश्च स्वभावजाः ॥१३३॥

तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि ।

तद्रूपा अनुभावस्वरूपाः । तत्र यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते ।

तत्र सात्त्विकाः—

विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्तिताः ॥१३४॥

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्मः।

सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः।

'गोबलीवर्दन्यायेन' ( भिन्नाः ) इति शेषः।

के ते ( सात्त्विकाः ) इत्याह—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ॥१३५॥
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः।

टीका—करं किरणं पाणिं च।* अमरेशदिशः प्राच्याः। उद्गमिति विकसोति—यः स्खलिति। बहिः प्रकाशयन् अनुमापयन्। अङ्गजा भावादयस्त्रयः। स्वभावजा लीलादयोऽष्टादश। शोभाकान्त्यादीनां रत्यादिप्रकाशकत्वाभावान्नानुभावरूपता। चेष्टा नायकस्य नेत्रविक्षेपादयः। पराः सात्त्विकविकारभिन्नाः। सत्त्वमिति। स्वात्मनि एव विश्रामो यस्य स रसादिः, तस्य प्रकाश उद्बोधस्तत्कारी। प्रागुक्तमपि सत्त्वलक्षणं शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम्। ते सात्त्विका विकाराः। भिन्ना अपीति। अपिना अभिन्ना इत्यस्य लाभः। ननु भेदाभेदयोर्विरोध इत्यत आह—गोबलीवर्देति। चानुभावत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सहानुभावत्व-समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्य समावेशः। यथा गोत्वेपि गोबलीवर्दे भेद समावेशः। २

तत्र

स्तम्भश्चेष्टाप्रतीघातो भयहर्षामर्षादिभिः ॥१३६॥
वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः।
हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥१३७॥

मदसंमदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः।
रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ॥१३८॥
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता।
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ॥१३९॥

टीका—। २ 'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।' इत्यादौ सात्त्विकभावस्य पृथगुपन्यासेनानुभावातिरिक्तत्वशङ्कानिरासार्थमिह एवमाह ॥ प्रतीघातः प्रतिबन्धः। वपुषो जलोद्गमः। रोम्णो विक्रिया उद्गमः। वैस्वर्यं स्वरविकारः। सुखदुःखाभ्यामिति सुखेन दुःखेन वेत्यर्थः।

यथा मम—

'तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम्।
कपोलौ घर्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥'

एवमन्यत्।

अथ व्यभिचारिणः—

विशेषादाभिमुख्येन चरणाद्व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥१४०॥

स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद् व्यभिचारिणः कथ्यन्ते।

ब्रह्म परममिति। ब्रह्मनिविष्टचेतसो यथा चेष्टाबाह्यज्ञाननिरासो भवति तथा नायिकानिविष्टचेतसोऽपीति भावः। अत्र स्तम्भस्वेदरोमाञ्चप्रलयाः। एवमन्यदिति ॥

'बाले नाथ विमुञ्च मानिनि रुषम्—' इत्यत्र स्वरभङ्गः। 'मा गर्वमुद्वह—' इत्यत्र वेपथुः। 'शीर्णं वीक्ष्य—' इत्यत्र वैवर्ण्यमश्रु च॥ विशेषादिति। विभावानुभावापेक्षया आभिमुख्येन रसानुगुण्येन रत्यादौ रसरूपतया संगच्छमानाः व्यभिचारिणः। उन्मग्ना बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूताः। निर्मग्ना विलम्बप्रतीतिकत्वेन तिरोभूताः। त्रयस्त्रिंशदिति न्यूनसंख्याया व्यवच्छेदकम्, न त्वधिकसंख्यायाः। अत एवोक्तम्—'हासक्रोधादयः शृङ्गारादयः व्यभिचारिणः' इति। एतदर्थमेव चकार उपन्यस्तः। तद्भिदा व्यभिचारिभावप्रकाराः। चरणात् मेलकात्।

के ते ( व्यभिचारिणः ) इत्याह—

निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः
स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः।
औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा
हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः॥१४१॥

तत्र निर्वेदः—

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।
दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्॥१४२॥

तत्त्वज्ञानान्निर्वेदो यथा—

'मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना।
दक्षिणावर्तशङ्खोऽयं हन्त चूर्णीकृतो मया॥'

अथावेगः—

आवेगः संभ्रमस्तत्र हर्षजे पिण्डिताङ्गता।
उत्पातजे स्रस्तताङ्गं, धूमाद्याकुलताग्निजे॥१४३॥

टीका—निर्वेदादीनां लक्षणमाह—तत्त्वेति। तत्त्वज्ञानमिह दृष्टविषयादावनुपादेयत्वज्ञानम्, न तु जीवात्मपरमात्मनोरभेदज्ञानम्। तस्मिन्सति नीच एव, न तु

स्वावमाननम्। तत्कारणं वैराग्यादौ लक्षणा। प्रथमादिपदात् पुराणश्रवणादीनां द्वितीयादिपदात् स्वस्य कुकर्मोद्भावनादीनां ग्रहणम्। तदिति—चूर्णीकृतः चूर्णाख्यद्रव्यविशेषीकृतः। विरक्तस्य दक्षिणावर्तशङ्खचूर्णनकथनमसंगतमित्युपमाकल्पनयायं निदर्शनालंकारः। तथा च स्वर्णकुम्भवालुकारन्ध्रपिधानवत् तुच्छं वैषयिकसुखम् तस्य रचना अनुकूलव्यापारः तदर्थिना तत्कामेन। परमपुरुषार्थसाधनतया दक्षिणावर्तशङ्खवदुपादेयो मनुष्यदेहः चूर्णीकृतः। जरया जर्जरीकृत इत्यर्थः। यद्वा रावणशक्त्या पतिते लक्ष्मणे श्रीरामस्य परिदेवनमिदम्। अयं लक्ष्मण एव दक्षिणावर्तशङ्खः मया चूर्णीकृतो विनाशितः, चूर्णाख्यद्रव्यविशेषीकृतश्च। कीदृशेन मया? रावणवधादिरेव स्वर्णकुम्भवालुकारन्ध्रपिधानं तद्रचनाकामेन। अतिशयोक्त्यलंकारोऽयं रूपकोपपादकः। अत्र पक्षे आपन्नत्वं निर्वेदस्वावमाननं बोध्यम्। एवमन्यदपि। तत्रावेगे पिण्डिताङ्गता संकुचितशरीरत्वम्। 'पीडिताङ्गता' इति पाठे स्पष्ट एवार्थः। उत्पातजे दिव्यनाभसभूमिजरूपत्रिविधोत्पातजन्ये।

राजविद्रवजादेस्तु शस्त्रनागादियोजनम्।
गजादेः स्तम्भकम्पादि, पांस्वाद्याकुलतानिलात् ॥ १४४ ॥
इष्टाद्धर्षाः, शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम्।

तत्र शत्रुजो यथा—

'अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनपेक्ष्य भरताग्रजो यतः।
क्षत्रकोपदहनार्चिषं ततः संदधे दृशमुदग्रतारकाम् ॥'
(Rag)

एवमन्यदूह्यम्।

अथ दैन्यम्—

दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥ १४५ ॥

यथा—

'वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणावशेषं गृहं,
कालोऽभ्यर्णजलागमः, कुशलिनी वत्सस्य वार्तापि नो।

यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥'

अथ श्रमः—

खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः ।

टीका—राजविद्रवजइत्यादिना शत्रुजादिग्रहणम् । नागादीत्यादिना अश्वादिपरिग्रहः । गजादेर्जायमाने आवेगे । एवमग्रेऽपि ॥ नृपं दशरथम् । स भार्गवः । यत्त्वेषु यः कोपः स एव दहनः तस्य अर्चिरिवार्चिरस्याः । तादृशीं दृशं यतः यस्मिन्, रामः ततः तस्मिन् । अतार्घ्यमर्घ्यमिति मुहुर्वदतो दशरथस्य भार्गवदर्शने संभ्रमः ॥ दौर्गत्यं दारिद्र्यम् । आदिना श्रमादेर्ग्रहणम् । अनौजस्यं निस्तेजस्त्वम् ॥ स्थूणा स्तम्भः । अभ्यर्णजलागमो निकटस्थवर्षासमयः ।

यथा—

'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी
सीता जवात्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद्ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम् ॥'

अथ मदः—

संमोहानन्दसंभेदो मदो मद्योपयोगजः ॥ १४६ ॥
अमुना चोत्तमः शेते, मध्यो हसति गायति ।
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥ १४७ ॥

यथा—

'प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रु वा प्रवद्वते परिहासः ॥'

टीका—सद्य इति वारंवारं गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथखङ्गम-श्रमत्ववधार्य श्रीरामस्य रोदनम् ॥ संमोहानन्दयोः संभेदो मेलकः । मद्यस्यासवस्य उपयोगाद भक्षणाज्जातः । अमुना मदेन ॥ प्रातिभं प्रागल्भ्यम् । विसरकेण मदेन । गूढं सूचितं रहस्यं यत्र स चासौ सहासश्चेति । तादृशः परिहासः ।

अथ जडता—

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।

अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥ १४८ ॥

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये—

'णवरिअ तं जुअजुअलं अण्णोण्णं णिहिदसजलमन्थरदिट्ठिम् ।

आलेक्खअप्पिअं विअ खणमेत्तं तत्थ संट्ठिअं मुअसङ्गम् ॥'

अथोग्रता—

शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।

तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ १४९ ॥

टीका—अप्रतिपत्तिः कर्तव्यानिश्चयः । तूष्णींभावो मौनम् । तत्र जडतायाम् । णवरिअ इति । 'केवलं तद्युवयुगलमन्योन्यं निहितसजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसङ्गम् ॥'—इति संस्कृतम् । णवरिअशब्दः केवलार्थे देश्यः ।

( उग्रता ) यथा—

'प्रणयिसखीसलीलपरिहासरसाधिगतै-

र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः

पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥'

अथ मोहः—

मोहो विचित्तताभीतिदुःखावेगानुचिन्तनैः ।
मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥ १५० ॥

यथा—

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥'

(Kumar)

अथ विबोधः—

निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।
जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥ १५१ ॥

टीका—प्रणयिनी या सखी तस्याः परिहासरसेनाधिगतैः प्राप्तैः । अकाण्डयमदण्ड इव भुजस्तवशिरसि पततु । अत्र मालतीशरीरे शरप्रहारं कुर्वतोऽघोरघण्टस्यापराधेन माधवस्य चञ्चलमेतादृशोक्त्या व्यज्यते ॥ वित्तस्य निमीलनत्वं विचित्तता । सुषुप्तिवारणायाह—भीतीति । आवेगः संभ्रमः । अनुचिन्तनमत्यन्तचिन्ता । अदर्शनमज्ञानम् । अभिषङ्गः शोकः । वृत्तिं विषयसंबन्धम् । संस्तम्भयता प्रतिबध्नता । एतेनाज्ञानकरत्वं मोहस्य सूचितम् । व्यसनं विपत् ॥ निद्रापगमहेतवो गीतवादित्रादयस्तेभ्यश्चेतनागमो ज्ञानलाभः । नयनमीलनं नेत्रप्रकाशः ।

यथा—

'चिररतिपरिखेदप्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा-
मशिथिलभुजचक्राश्लेषभेदं तरुण्यः ॥'

अथ स्वप्नः—

स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।
कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ १५२ ॥

यथा—

'मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेन ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥' (Megha)

टीका—चरमं नायकनिद्रायाः पश्चात् । पूर्वं नायकप्रबोधात् । [illegible] दृढनिविडेन भुजेन यः कण्ठाश्लेषः तस्य भेदं भङ्गम् । 'प्रशिथिल—' इति पाठे निद्रावशाद् भुजशैथिल्यं (प्रियः प्रबुध्य) भुजाक्षेपं कर्तुमर्हतीति । [illegible] नोचित इति भावः ॥ मामिति । यक्षस्य मेघं प्रति प्रियायै वाचनिकसंदेशमिदम् । मां यचम् । कथमपि महता कष्टेन । मुक्ता इव स्थूलाः अश्रुबिन्दवः ।

अथापस्मारः—

मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।
भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥१५३॥

'आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥'

अथ गर्वः—

गर्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।
अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥ १५४ ॥

तत्र शौर्यगर्वो यथा—

'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन साध्यताम् ॥'

टीका—मन:क्षेप इति—मनसो नाडीविशेषनिवेशेन घूर्णनमित्यर्थ:। ग्रहादीत्यादिना भूतादिपरिग्रह: तथा धातुवैषम्यादिपरिग्रह:। फेनायमानं फेनमुद्वमन्तम्। असौ श्रीकृष्ण: आशशङ्के ज्ञातवान्॥ गर्व: मदश्चित्तविकारविशेष:। राज्ञ: कोशदण्डादिजन्य: प्रताप: प्रभाव:। श्रीस्त्रिवर्गसंपत्ति:। अवज्ञा परस्मिन्।

अथ मरणम्—

शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत्।

यथा—

'राममन्मथशरेण ताडिता दु:सहेन हृदये निशाचरी।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा॥'

(Rag. See Our Ch. VII)

अथालस्यम्—

आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्॥१५५॥

यथा—

'न तथा भूषयत्यङ्गं न तथा भाषते सखीम्।
जृम्भते मुहुरासीना बाला गर्भभरालसा॥'

अथामर्ष:—

निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता।
नेत्ररागशिर:कम्पभ्रूभङ्गोत्तर्जनादिकृत्॥१५६॥

टीका—राममिति। सा निशाचरी ताडका राक्षसी, सैव निशाचरी अभिसारिका नायिका। राम एव मन्मथ: तस्य शरेण हृदये वक्षसि च ताडिता सती जीवितेशो यम एव जीवितेश: प्रिय: तस्य वसतिं जगाम। कीदृशी। गन्धवद्रुधिरमेव चन्दनं तेनोक्षिता सिक्ता॥ आसितमुपवेशनम्। [illegible] निन्दा। भर्त्सनमाक्षेप:। अपमान:

पराभवः। आदिना वित्तादिग्रहणादेर्ग्रहणम्। अभिनिविष्टता निन्दादिकनिर्यातननिर्णयः।

यथा—

'प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्॥'

अथ निद्रा—

चेतःसंमीलनं निद्रा श्रमक्लममदादिजा।
जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्॥१५७॥

यथा—

'सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम्।
निद्रार्धमीलिताक्षी सा लिखितेवास्ति मे हृदि॥'

अथावहित्था—

भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था।
व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी॥१५८॥

यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥' (Kum)

टीका—। प्रायश्चित्तमिति—द्रोणादीन्प्रति अर्जुनस्योक्तिरियम्। व्यतिक्रमात् हननात्। चेतसः संमीलनं मेध्यानाडीप्रवेशेन निश्चलत्वम् निद्रा। सार्थकानि अनर्थकानि च पदानि यत्र तद्यथा स्यात्तथा। मन्थराणि गम्भीराणि अनासन्नानि असंपूर्णानि वा अक्षराणि यत्र तद्यथा स्यात्तथा। लिखितेव स्थिता। हर्षादेराकारस्य सूचकस्य मुखरागादेर्गुप्तिः संवरणम्। सक्तिरासङ्गः। अन्यथेति। अप्रक्रान्तस्य आभाषणं विलोकनं च। आदिना क्रियामात्रस्य परिग्रहः।

अथौत्सुक्यम्—

इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ॥१५९॥

यथा—'यः कौमारहरः स एव हि वरः—' इत्यादि ।

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसन-धर्मयोगित्वाद्व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् ।

अथोन्मादः—

चित्तसंमोह उन्मादः कामशोकभयादिभिः ।
अस्थानहासरुदितगीतप्रलपनादिकृत् ॥१६०॥

यथा मम—

'भ्रातर्द्विरेफ भवता भ्रमता समन्ता-
त्प्राणाधिका प्रियतमा मम वीक्षिता किम् ।
(झंकारमनुभूय सानन्दम्)
ब्रूषे किमोमिति सखे कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कीदृशीयम् ॥'

टीका—। व्यभिचारिभावस्येति—तत्रानुभावादिकृतपरिपोषराहित्येन रतेः संपूर्णरसत्वं न संभवति। वर्णनीयत्वेन चमत्कारित्वेनौत्सुक्यस्यैव प्राधान्यमिति भावः। अत एव काव्यप्रकाशटीकाकारचण्डीदासेनोक्तम्—'रसपदं चात्र संभोगव्य-भिचार्यौत्सुक्यमाह 'रस्यते आस्वाद्यते' इति व्युत्पत्त्या। न तु संभोगनामा रसः। स्वाधीनपतिकायाः क्रीडास्थानं प्रत्युत्सुकताया वर्णनीयत्वात्' इति। गतार्थं प्राप्तविषयम्॥ चित्तस्य संमोहश्चेतनाचेतनादिविशेषज्ञानजननाक्षमत्वम् उन्मादः। भ्रातरिति। व्यवस्यति कर्तुं मीहते। अत्र कामिन भ्रमरः [illegible] विशेषनिर्धारणाक्षमत्वम्।

अथ शङ्का—

परक्रौर्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम्।
वैवर्ण्यकम्पवैस्वर्यपार्श्वालोकास्यशोषकृत् ॥१६१॥

यथा मम—

'प्राणेशेन प्रहितनखरेष्वङ्केषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥'

अथ स्मृतिः—

सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नयनादिकृत्।
स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ॥१६२॥

यथा मम—

'मयि सकपटं किंचित्क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम्।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥'

टीका—प्रहितनखरेषु क्षतनखाघातेषु। जात आतङ्कः सख्याद्युपहासरूपा शङ्का यस्याः सा। अत्र संभोगचिह्नगोपन एव विश्रान्तिरिति शङ्काया एव प्राधान्यम्। सदृशेति—चिन्ता भावनाख्यसंस्कारः। आद्यपदेन संबन्धिज्ञानादेर्ग्रहणम्। अत्र सदृशज्ञानादेः संस्कारोद्बोधनद्वारा संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वमिति बोध्यम्। मयीति—सकपटं यथा स्यात्तथा क्वापि अजिज्ञासितपदार्थे किंचित्प्रणीत-लोचने मयि तिर्यक्कुटिलं यथा स्यात्तथा विजृम्भिता व्यापारिता वा तारका यस्य तादृशं

नयनं प्राप्ते सति स्मितमुपगतां सखीं दृष्ट्वा सलज्जं यथा स्यात्तथा अवाञ्चितमाननितं स्मेर स्मेरमाननं स्मरामि।

अथ मतिः—

नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः।
स्मेरता धृतिसंतोषौ बहुमानश्च तद्भवाः ॥१६३॥

यथा—

'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥' Sak. I

अथ व्याधिः—

व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्।

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः। स्पष्टमुदाहरणम्।

अथ त्रासः—

निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः ॥१६४॥

टीका—नीतिमार्गो नीतिशास्त्रं तस्यानुसृतिरवगमः। आदिना अनुमानादेर्ग्रहणम्। अथ निर्धारणं अर्थनिश्चयः मतिः। असंशयमिति। शकुन्तलामालोक्य दुष्यन्तस्यानुमानमिदम्। क्षत्रपरिग्रहक्षमा क्षत्रियविवाहयोग्या 'इयम्' इति शेषः। अस्यां शकुन्तलायाम्॥ समर्थयते—सतामिति। प्रमाणं निश्चयबीजम्। अन्तःकरणस्य मनसः प्रवृत्तयः संकल्पादयः॥ वाताद्यैरिति। आद्यपदेन पित्तश्लेष्मणोर्ग्रहणम्। भूमीच्छा भूमिपतनेच्छा। तत्र व्याधावुदाहरणं यथा मम—'प्रियजनपरिषङ्गाद्वेपमानां कृशाङ्गी विकलवचनवर्णां स्वेदसंसिक्तगात्रीम्। विपुलपुलकलेखामाकलय्य ज्वरार्तां कुमतिरमितचिन्तासागरे निर्ममज्ज ॥' निर्घात इति। 'यदान्तरीक्षे बलवान्मरुतो मरुता हतः। पतत्यधः स निर्घातो जायते वायुसंभवः ॥' इत्युक्तलक्षणो निर्घातः।

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोक-
नीयताम् ॥

अथ व्रीडा—

धार्ष्ट्याभावो व्रीडा वदनानमनादिकृद् दुराचारात्।

यथा—'मयि सकपटं—' इत्यादि।

अथ हर्षः—

हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ १६५ ॥

टीका—'ऊरुच्छिखा च सूत्राया रक्तनीलशिखोज्ज्वला। पौरुषी च प्रमाणेन उल्का परिस्फुरदिति'। जलविहारवर्णनमिदम्। नायकस्य विलोकनीयतां रमणीयताम्। धार्ष्ट्याभावः प्रागल्भ्यराहित्यम् व्रीडा।

यथा—

'समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य यथैव दुर्गतः।
मुदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥'
(Rag)

अथासूया—

असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥१६६॥

यथा—

'अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम्॥'

(Sisu)

अथ विषादः—

उपायाभावजन्मा तु विषादः सत्त्वसंचयः।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥१६७॥

टीका—। पिता दिलीपः। शरीरे शरीरचेष्टायाम्। प्रबभूव समर्थो बभूव। इन्दूदयेन मूर्च्छितः प्रवृद्धः। अतिवृद्धस्य समुद्रस्य स्तम्भितत्वं भवतीत्यतिप्रायेणेयमुपमा। अथ वा यथा पयोधिरिन्दूदयेन तरलो भवति तथा पुत्रोत्पत्त्या हर्षतरलो बभूवेत्युपमा॥ क्रोधेङ्गितं मुखरागादि। मानं पूजाम्। चेदिपतिः शिशुपालः। सत्त्वसंचयो बलहानिः।

यथा मम—

एसा कुडिलघणेण चिउरकडप्पेण तुह णिबद्धा वेणी।
मह सहि दारइ डंसइ आअसजट्ठिव्व कालउरइव्व हिअअम्॥'

अथ धृतिः—

ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः।
सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥१६८॥

यथा मम—

'कृत्वा दीननिपीडनां निजजने बद्ध्वा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः।
द्रव्यौघाः परिसंचिताः खलु मया यस्याः कृते सांप्रतं
नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः॥'

अथ चपलता—

मात्सर्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।

तत्र भर्त्सनापारुष्यस्वच्छन्दाचरणादयः ॥१६९॥

टीका—एषा इति । 'एषा कुटिलघनेन चिकुरकलापेन तव निबद्धा वेणी । मम सखि दारयति दशत्यायसयष्टिरिव कालोरगीव हृदयम् ॥' इति संस्कृतम् । स्पृहायाः समाप्तिरिव संपूर्णत्वम् । आमुष्मिकीः परलोकभवाः । नीवारस्तृणधान्यम् । कृते निमित्तम् । सांप्रतं वार्धके । अत्र तत्त्वज्ञानेन निःस्पृहत्वम् ।

यथा—

'अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः ॥'

अथ ग्लानिः—

रत्यायासमनस्तापक्षुत्पिपासादिसंभवा ।

ग्लानिर्निष्प्राणताकम्पकार्यानुत्साहतादिकृत् ॥१७०॥

यथा—

'किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डुक्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्त्रम् ॥' ( Uttara )

अथ चिन्ता—

ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।

टीका—अन्यास्विति। मधुपानकालीनचरणप्रहारादिरुपमर्दः पक्षे संभोगकालीनचुम्बनालिङ्गनादिः। लोलं सतृष्णम्। मुग्धां कोमलां सुरतमूढां च। रजः परागः आर्तवं च। अकाले मकरन्दाभावदशायां बाल्ये च। अत्रोपभोक्तरि बालाया अस्थैर्यं परुषवचनेन प्रतीयते। निष्प्राणत्वानौजस्यसत्त्वसंचयानां बलहानिरूपत्वेऽपि विभिन्नकारणत्वेन ग्लानिदैन्यविषादानां भेदः।

यथा मम—

'कमलेण विअसिएण संजोएन्ती विरोहिणं ससिविम्बम्।
करअलपल्लत्थमुही किं चिन्तसि सुमुहि अन्तराहिअहिअआ॥'

अथ वितर्कः—

तर्को विचारः संदेहाद्भ्रूशिरोऽङ्गुलिनर्तकः॥१७१॥

तर्को—'किं रुद्धः प्रियया—' इत्यादि।

एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं तदुपलक्षणमित्याह—

रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः।

तथाहि शृङ्गारेऽनुच्छिद्यमानतयावस्थानाद् रतिरेव स्थायिशब्दवाच्या। हासः पुनरुत्पद्यमानो व्यभिचार्येव। व्यभिचारिलक्षणयोगात्। तदुक्तम्—

'रसावस्थः परं भावः स्थायितां प्रतिपद्यते।' इति।*

टीका—कमलेणेति। 'कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बम्। करतलपर्यस्तमुखी किं चिन्तयसि सुमुखि अन्तराहितहृदया॥' इति संस्कृतम्। अनियते स्वावस्थितनियमरहिते रसे। अनुच्छिद्यमानतया अवश्यं स्थायित्वेन। उत्पद्यमानः विशेषानुकूल्येन शृङ्गाररूपतया रतौ संक्रममाणः।

तत्कस्य स्थायिनः कस्मिन्रसे संचारित्वमित्याह—

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ॥१७२॥

शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।

इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः ॥१७३॥

अथ स्थायिभावः—

अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः ।

आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति संमतः ॥१७४॥

यदुक्तम्—

'सक्सूत्रवृत्त्या भावानामन्येषामनुगामकः ।

न तिरोधीयते स्थायी तैरसौ पुष्यते परम् ॥' इति ।

तद्भेदानाह—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।

जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ताः शमोऽपि च ॥१७५॥

टीका—परमिति* अवश्यमित्यर्थः । विभावानुभावव्यभिचारिपरिष्कृतः स्थायिभावो रसतांलभते इति, एवञ्च भावः रसावस्थः सन्नेव स्थायितां गच्छति । अक्षमा इति । 'भावाः' इति शेषः । कन्दो मूलम् । सक्सूत्रवृत्त्या स्वक्सूत्रन्यायेन । अनुगामकः व्याप्तत्वेन संबन्धी । तैर्भावैः पुष्यते रसरूपतां नीत्वा प्रवृद्धः क्रियते । तद्भेदान् स्थायिभावान् ॥ भावाः स्थायिभावाः । स्थायिभावाः ।

तत्र—

रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितम् ।

रागादिवैकृतैश्चेतोविकासो हास इष्यते ॥१७६॥

इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक् ।

प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ॥१७७॥

कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥१७८॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा।
विविधेषु पदार्थेषु लोकसीमातिवर्तिषु ॥१७९॥

टीका—रतिरिति। मनसोऽनुकूले प्रिये वस्तुनि प्रवणायितम् प्रमार्द्रं मनो रतिरित्यर्थः। तच्चोत्कटावेश एव पर्यवस्यति। स चानुराग एव सोऽपि प्रकृते सुरतेच्छारूप एव। केचित्तु—'स चानुराग एव सोऽपीष्टसाधनताज्ञानधारारूपः अभिलाषहेतुत्वेनोक्तत्वात्' इत्याहुः। तन्न। सुरतेच्छाया आलम्बनप्राप्त्यभिलाषं प्रति हेतुत्वसंभवेन लक्षणाया अयोगात्। चेतोविकास उपहसनीयत्वेन ज्ञानसुखविकासरूपहास्यहेतुः। चेतोवैक्लव्यं दुःखम्। तेनाप्यस्य अपचिकीर्षाया अवबोध उत्कटत्वम्। कार्यारम्भेषु संनिकृष्टकार्येषु संरम्भ उत्कट आवेशः। केचित्तः—'संरम्भः सहर्षप्रवृत्तिः' इत्याहुः। तन्न। आद्यप्रवृत्तिरूपस्यारम्भस्य प्रवृत्त्यसंभवात्, वीररसे उत्कटावेशस्यैव स्थायित्वं नास्वाद्यमानत्वाच्च। रौद्रशक्त्येति। शार्दूलादेरनिष्टदर्शनसामर्थ्येन जनितं यच्च तसो वैक्लव्यमस्थिरत्वं तत् नामभयम्।

विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः।
शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम् ॥१८०॥

यथा मालतीमाधवे रतिः। लटकमेलके हासः। रामायणे शोकः। महाभारते शमः। एवमन्यत्रापि। एते ह्येतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः।

टीका—भयमित्यर्थः। केचित्तु—'वैक्लव्यं मनसो भयम्' इति पठित्वा रौद्रः क्रुद्धः तस्य क्रोधरूपया शक्त्या वैक्लव्यमिह भाविदुःखे द्वेषः। तस्य च परक्रोधजन्यत्वम्, तज्जन्यसुखवि[illegible]। न तु तज्जन्यं दुःखमेव वैक्लव्यम्, तदनुत्पत्तिदशायामपि

भीत्यनुपलम्भात्। एवं च मनःक्षोभरूपाच्चासाधारणव्यभिचारिभावादस्य भेदः' इति व्याकुर्वन्ति। तन्न। व्याघ्रादीनां क्रोधाभावेऽपि तेभ्यो भयोत्पत्तिसंभवात्। मनःक्षोभरूपत्वासाधारणव्यभिचारिभावस्य भयंकरव्याघ्रबाधानिष्टजननसामर्थ्यं जन्यत्वं नैव भेदसंभवाच्च॥ लोकसीमातिवर्तिषु लोकव्यवहारातिक्रान्तेषु। विस्फारो विस्तारः। स च दृष्टहेतुभ्योऽसंभवित्वज्ञानेन हेत्वनुसंधाने मनोव्यापाररूपः। निरीहावस्थायां स्वस्य जीवस्य आत्मनि परमात्मरूपे विश्रामोऽवस्थानम्। तज्जन्यसुखमित्यर्थः। 'शान्तरसस्य निर्वेदः स्थायी' इति काव्यप्रकाशोक्तत्। तत्र निर्वेदस्य व्यभिचारित्वेन स्थायित्वायोगात्। 'अविरुद्धाः' इति कारिकां विवृणोति—एते हीति। रत्यादयो हीत्यर्थः।

किं च।

नानाभिनयसंबन्धान्भावयन्ति रसान्यतः।
तस्माद्भावा अमी प्रोक्ताः स्थायिसंचारिसात्त्विकाः॥१८१॥

यदुक्तम्—

'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्।'

अथ रसस्य भेदानाह—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः॥१८२॥

टीका—एषु रसेषु भावानां विशेषलक्षणान्युक्त्वा सामान्यलक्षणमाह—किं चेति। वेषचेष्टादिभिर्नायकसदृशीकरणमभिनयः तस्य संबन्धान् तदाश्रयान्। अभिनयेति काव्यमात्रपरम्। सात्त्विका इति अनुभावमात्रोपलक्षणम्। बहुवचनाद्विभावपरिग्रहः। सुखदुःखादिभिरिति। सुखं शमः। दुःखं शोकः। आदिना रत्यादिपरिग्रहः। सुखादिभिः स्थायिभावैस्तद्भावनं रसत्वप्रापणं यस्मात्स भाव इत्यर्थः। अष्टाविति प्रायशो नाट्याभिप्रायेण, शान्तस्य नाट्ये तादृशपुष्टिविरहाच्च। तथापि नाट्येऽपि नवरसस्य युक्तत्वम् इति प्रागुक्तम्।

तत्र शृङ्गारः—

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥१८३॥
परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥१८४॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ॥१८५॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥

यथा—'शून्यं वासगृहम्—' इत्यादि । अत्रोक्तस्वरूपः पतिः, उक्तस्वरूपा च बाला आलम्बनविभावौ । शून्यं वासगृहमुद्दीपनविभावः । चुम्बनमनुभावः लज्जाहासौ व्यभिचारिणौ । एतैरभिव्यक्तः सहृदयविषयो रतिभावः शृङ्गाररसरूपतां भजते ।

टीका—शृङ्गमिति । मन्मथस्य संभोगेच्छायाः उद्भेद उद्बोधः । तदागमनहेतुकः मन्मथोद्भेदप्राप्तिजन्यः । वीतरागाणां रसानुत्पत्तेः । उत्तमः प्रकृतिर्नायको यत्र सः । प्राय इत्यनेन शृङ्गाराभासादावधमप्रकृतित्वं सूचितम् । एवं च शृङ्गमृच्छति कारणत्वेन प्राप्नोतीति शृङ्गारपदव्युत्पत्तिरवधेया । अथवा शृङ्गेण अर्यते सामाजिकैः प्राप्यतेऽसाविति । रोलम्बो भ्रमरः । शृङ्गारे परोढाननुरागिवेश्यावर्जनम् ।

तद्भेदानाह—

विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः ॥१८६॥

तत्र

यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।

अभीष्टं नायकं नायिकां वा ।

स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यात् ॥१८७॥

टीका—तत्र शृङ्गारभेदयोर्मध्ये विप्रलम्भमाह—यत्र त्विति । तुशब्दश्चार्थः । यत्र रसे प्रकृष्टा प्रकरणादिना प्रधानत्वं प्राप्ता रतिरस्ति । नायिका नायकौ वा अभीष्टं नायकं नायिकां वा नोपैति नोपभुङ्क्ते असौ विप्रलम्भ इत्यर्थः । तथा चोपभोगाभाव-संवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्यर्थः । करुणादौ शोकोद्दीपनतया रतिसत्त्वेन तत्रातिव्याप्तिवारणाय प्रकृष्टेति विशेषणम् । संभोगेऽतिव्याप्तिवारणाय अत्र उपभोगा-भावेति । विप्रलम्भसमानविषयके ज्ञानान्तरे संस्कारे वा अतिव्याप्तिवारणाय रस इति । अन्ये तु—'यत्र दुःखसंवलितत्वाद्रतिर्न प्रकृष्टा अभीष्टमुपैति विषयीकरोति स विप्रलम्भ' इति व्याकुर्वन्ति । तन्न । करुणेऽतिव्याप्तेः । यदि च 'यत्र' इत्यस्य 'शृङ्गारे' इति व्याकाराक्करुणे नातिव्याप्तिरित्युच्यते तदा 'अभीष्टमुपैति' इत्यस्यानर्थ-क्यम् । अभीष्टविषयकरतेरेव शृङ्गारत्वेन परिणामात् । अपरे तु—'नायिकादिभिर-भीष्टं नोपैति न संगच्छते । तथा चाभीष्टविच्छेदसंवलिता रतिर्यत्र स विप्रलम्भ' इत्याहुः । तन्न । प्रणयमानादावभीष्टविच्छेदाभावेनाव्याप्तेः । केचित्तु—'संयोगः सुखसंभिन्नो विप्रलम्भस्तु दुःखयुक् । रतिस्तयोः प्रकर्षः स्यादाधिक्यात्सुखदुःखयोः ॥' इति दर्शनाद् दुःखसंवलितरतिस्थायिभावको रसो विप्रलम्भः' इत्याहुः । तदपिन । प्रणयमाने दुःखायोगादव्याप्तेः । स च विप्रलम्भः चतुर्धा इतीदमुपलक्षणम् । विरहोऽपि वेदितव्यः स च गुर्वादिपरतन्त्रत्वात् । संगमप्रतिरोधी यथा—'किं रुद्धः प्रियया—' इति ॥

तत्र

श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥१८८॥
श्रवणं तु भवेत्तत्र दूतबन्दीसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ॥१८९॥

अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च ।
उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः ॥१९०॥
अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ॥१९१॥
अलक्ष्यवाक्प्रलापः स्याच्चेतसो भ्रमणाद्भृशम् ।
व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ॥१९२॥
जडता हीनचेष्टत्वमङ्गानां मनसस्तथा ।

शेषं स्पष्टम् ।

क्रमेणोदाहरणानि—

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।

टीका—तत्र पूर्वरागादिषु । मिथ इति अन्योन्यमित्यर्थः । दशाविशेषोऽवस्थाभेदः । अप्राप्तौ परस्परासंगमे । बन्दिनः स्तुतिपाठकाः । दशाविशेषानाह—अभिलाष इति । दश प्रकाराः । अत्र पूर्वरागे । कामकृता रतिजन्या दशाः कामदशाः । स्पृहा अभीष्टप्राप्तीच्छा । अपरिच्छेदो विशेषनिर्धारणाभावः । अलक्ष्यवाक् निर्विषयं वचः । शेषं स्मृत्यादिकम् ॥ प्रेमार्द्रा इति प्रेम्णा आर्द्रा निबिडसंपृक्ताः । प्रेमाभिव्यञ्जिका इति यावत् । प्रणयं द्रष्टुः स्नेहं स्पृशन्ति जनयन्ति । परिचयान्मुहुर्मुहुर्दर्शनात् । उद्गाढ उत्कटो यो रागः सुरतेच्छा तस्योदयो याभ्यस्ताः ।

यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥'

(Malati).

अत्र मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः ।

'कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम् ॥"

अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता । इदं मम । 'मयि सकपटम्—' इत्यादौ नायकस्य स्मृतिः । 'नेत्रे खञ्जनगञ्जने—' इत्यादौ गुणकथनम् । 'श्वासान्मुञ्चति—' इत्यादौ उद्वेगः ।

'त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥'

(Kum)

अत्र प्रलापः ।

'भ्रातर्द्विरेफ—' इत्यादावुन्मादः ।

'पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥'

अत्र व्याधिः ।

'भिसिणीअलसअणीए णिहिअं सव्वं सुणिच्चलं अङ्गम् ।
दीहो णीसाससहरो एसो साहेइ जीअइत्ति परम् ॥'

टीका—'निशीथिनीम्' इत्यविच्छेदे व्याप्तौ द्वितीया । इन्द्रजालेति । इन्द्रजालस्य कुहकस्य क्रीडा । 'मयि सकपटं—' इति स्मृतिसंचारिभावोदाहरणम् । 'नेत्रे खञ्जनगञ्जने—' इति प्ररूढयौवनाया उदाहरणम् । त्रिभागशेषासु तृतीयभागावशिष्टासु । अलक्ष्यवाक् अविषयवचः । असत्यं मिथ्या शिवस्य कण्ठेऽर्पितं बाहुबन्धनं यया । यद्वा असत्यस्य अलीकदृष्टस्य शिवस्य कण्ठेऽर्पितं बाहुबन्धनं यया । 'भ्रातर्द्विरेफ—' इत्युन्मादसंचारिभावोदाहरणम् । क्षामं कृशम् । सरसं सानुरागम् ।

तव मालत्याः। चेविर्येति एतच्छरीराचिकित्स्येत्यर्थः। हृदन्तः हृदयमध्ये। भिन्निणीति। 'बिसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम्। दीर्घो निःश्वासभर एष साधयति जीवतीति परम् ॥'

अथ जडता। इदं मम।

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ॥१९३॥
जातप्रायं तु तद्वाच्यं चेतसाकाङ्क्षितं तथा।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥१९४॥

तत्राद्यं यथा—

'शेफालिकां विदलितामवलोक्य तन्वी
प्राणान्कथंचिदपि धारयितुं प्रभूता।
आकर्ण्य संप्रति रुतं चरणायुधानां
किं वा भविष्यति न वेद्मि तपस्विनी सा ॥'

द्वितीयं यथा—

'रोलम्बाः परिपूरयन्तु हरितो झंकारकोलाहलै-
र्मन्दंमन्दमुपैतु चन्दनवनीजातो नभस्वानपि।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥'

ममैतौ।

तृतीयं यथा—कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते। एष च प्रकारः करुणविप्रलम्भविषय इतिवक्ष्यामः।

टीका—रसस्य रतेर्विच्छेदहेतुत्वाद् विनाशहेतुत्वात्। रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मिलनाभावाद्रसत्त्वं नोपपद्यत इति मरणं न वर्ण्यते। तन्मरणं जातप्रायं वाच्यं यदि स्यात् प्रत्युज्जीवनम् [illegible] समर्था। संप्रति रात्रिशेषत्वा-

नार्धे । चरणायुधानां कुक्कुटानाम् । किं कीदृगवस्था । तपस्विनी ब्रह्मचारिणी मैथुनरहितत्वात् । अथवा तुच्छा अर्धरात्रे शेफालिका विकसति, तदानीमेव त्वामप्राप्य कथंचित्प्राणान्धारयति, रात्रिशेषयामार्धे कुक्कुटा नदन्ति, इदानीमपि त्वामप्राप्य सा मृतप्रायेति भावः । द्वितीयं चेतसा काङ्क्षितं वरणम् । नभस्वान् वायुः । पञ्चमं स्वरविशेषम् । अश्मसारकठिनाः लोहकठिनाः प्राणाः ।

केचित्तु—

'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः ॥' इत्याहुः ।

तत्र च

आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ।

इङ्गितान्युक्तानि यथा रत्नावल्यां सागरिकावत्सराजयोः ।
आदौ पुरुषानुरागे संभवत्यप्येवमधिकं हृदयंगमं भवति ।

नीली कुसुम्भं मञ्जिष्ठा पूर्वरागोऽपि च त्रिधा ॥१२५॥

तत्र

न चातिशोभते यन्नापैति प्रेम मनोगतम् ।
तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः ॥१२६॥
कुसुम्भरागं तत्प्राहुर्यदपैति च शोभते ।
मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते ॥१२७॥

अथ मानः—

मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।
द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि ॥२०७॥

प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ।

[टीका—नयनप्रीतिर्दर्शनेच्छा। चित्तासङ्गः मनसः संगतिः। नायकप्राप्तीच्छा-संकल्पः प्राप्त्युपायादिचिन्ता। तत्र च पूर्वरागे च। तदिङ्गितैः स्त्रीचेष्टाविशेषैः। इङ्गितान्युक्तानीति। अभिलाषादिरूपाणीत्यर्थः। एवं प्रथमं स्त्रिया रागवर्णनम्॥ मनोगतं मनोहरम्। 'एवमधिकहृदयंगमता भवति' इति पाठः। एवं प्रथमं स्त्रिया रागवर्णने। कुसुम्भरागमञ्जिष्ठारागयोर्लक्ष्यं दर्शयितव्यमवश्यं यदि श्राव्यम्। मानमाह—द्वयोरिति। स तु मानस्तु।]

द्वयोरिति नायकस्य नायिकायाश्च उभयोश्च प्रणयमानो वर्णनीयः। उदाहरणम्। तत्र नायकस्य यथा—

'अलिअपसुत्तअणिमीलिअच्छ देसु सुहअ मज्झ ओआसम्।
गण्डपरिउम्बणपुलइअङ्ग ण उणो चिराइस्सम्॥'

नायिकाया यथा कुमारसंभवे संध्यावर्णनावसरे।

उभयोर्यथा—

'पणअकुविआणँ दोण्णं वि अलिअसुत्ताणँ माणइन्ताणम्।
णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो॥'

अनुनयपर्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता, किंतु संभोगसंचार्याख्यभावत्वम्।

यथा—

'भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।*

[द्वयोः स्त्रीपुंसयोः प्रमोदे प्रेम्णि। ननु प्रमोदे सति कोप एव न भवति, कथं तत्र मानलक्षणसंगतिरित्यत आह—प्रेम्ण इति। कुटिलगामित्वात् [illegible]पि कारणं तत्संभावनया

कोपो भवतीति भावः। यद्वा कुटिलगामित्वाद् दुरवगमस्वभावत्वात्। अलिअ इति। 'अलीकप्रसुप्तक निमीलिताक्ष देहि सुभग मह्यमवकाशम्। गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्यामि॥' इति संस्कृतम्। मम विलम्बेन तव क्रोधो जात इति लक्ष्यते। पुनरेवं विलम्बं न करिष्यामीति भावः। अत्रालीकस्वप्ने नायकस्य कौटिल्यम्। पणअकुवि इति। 'प्रणयकुपितयोर्द्वयोरप्यलीकसुप्तयोर्मानविज्ञयोः। निश्चलनिरुद्ध-निःश्वासदत्तकर्णयोः को मल्लः॥' इति संस्कृतम्। मल्लो मानभङ्गसमर्थः॥ प्रिय-वचनादिरूपमानभङ्गानुकूलव्यापारोऽनुनयः। तत्पर्यन्तासहत्वं तं विनैव भङ्गुरत्वं चेत्यर्थः। अस्य प्रणयमानस्य ईर्ष्या। अत्रासूया तस्या एव व्यभिचारित्वेन गमितत्वात्॥ सूभङ्ग इति। मानोपदेष्ट्रीं सखीं प्रति नायिकाया उक्तिरियम्। दग्धाननं तुच्छमुखम्।]

* 'कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने॥'
( निर्वहनं मानावलम्बनमित्यर्थः )।

यथा वा—

'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।
दंपत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः॥'

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते॥१९९॥
ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसंभवा॥२००॥

तत्र दृष्टे यथा—

'विनयति सुदृशो दृशोः परागं
प्रणयिनि कौसुममाननानिलेन।

तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे ॥'

टीका—स्त्रीणामिति। नायकस्यायं न भवतीति भावः। सुरतश्रमवशादुत्कट-निद्राप्राप्तिहत्स्वप्नायितम्। भोगाङ्कः संभोगचिह्नम्। गोत्रस्य नाम्नः स्खलनम्, अस्मिन्नुच्चारणम्। एतत्संभवा तत्परामर्शजन्या। विनयति निरस्यति सति। 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इति शासनान्न कौसुममिति पौनरुक्त्यम्। तथा अहितयुवतेः प्रतिपक्षनायिकायाः। रोषरजोभिर्नायकापराधजन्यक्रोधप्रभवपरागैः।

संभोगचिह्नेनानुमिते यथा—

'नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-
न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥'

एवमन्यत्र ॥

साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम्।
तद्भङ्गाय पतिः कुर्यात्षडुपायानिति क्रमात् ॥२०१॥
तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम्।
दानं व्याजेन भूषादेः, पादयोः पतनं नतिः ॥२०२॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम्।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम्।

यथा—'नो चाटुश्रवणं कृतम्—'इत्यादि। अत्र सामादयः पञ्च सूचिताः। रसान्तरमूह्यम्।

अथ प्रवासः—

प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च सम्भ्रमात्।

टीका—नवनखेति। नायकं प्रति मानिन्या उक्तिरियम्। स्थगयसि आच्छादयसि। परिमलो विमर्दोत्थकुङ्कुमादिस्तस्य गन्धः। केन उपायेन। वरीतुं गोपयितुम्॥ प्रसङ्गान्मान भङ्गोपायानाह—सामेति। तद्भङ्गाय मानभङ्गाय। तस्या मानिन्याः सख्या उपार्जनं प्रसादनम्। अवधीरणमवज्ञया त्यागः। रभसः संभ्रमः। यतो रभसादेः कोपस्य ध्वंसस्तद्रसान्तरमित्यर्थः। रसान्तरोदाहरणं यथा—'कदं मनोरसि कृतपदनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये। विहल्य किं किमिति सजल्पया तया ससाध्वसं कुपितममोचि कान्तया॥' अत्र कान्तवचसि शरपतनशङ्कया मानभङ्गः॥ प्रवास इति। भिन्नदेशित्वं भिन्नदेशवर्त्तित्वम्। अत्रापि यत्रेत्यनुषज्यते। यत्र स्त्रीपुंसयोर्भिन्नदेशित्वं तत्तदनुभावजनकत्वेन स्वाद्यते प्रवास इत्यर्थः। अस्य प्रवासस्य कारणान्याह—कार्यादिति।

तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥२०४॥
निःश्वासोच्छ्वासरुदितभूमिपातादि जायते।
(तत्रप्रवासे)।

किं च।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः॥२०५॥
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह॥२०६॥
असौष्टवं मलापत्तिस्तापस्तु विरहज्वरः।
अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताधृतिः॥२०७॥
अनालम्बनता चादि शून्यता मनसः स्मृता।
तन्मयं तत्प्रकाशो हि वाह्याभ्यन्तरतस्तथा।

शेषं स्पष्टम्।

एकदेशतो यथा मम तातपादानाम्—
'चिन्ताभिः स्तिमितं मनः, करतले लीना कपोलस्थली,

प्रत्युषच्चणदेशपाण्डु वदनं, श्वासैकखिन्नोऽधरः ।
अम्भःशीकरपद्मिनीकिसलयैर्नापैति तापः शमं,
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम् ॥'

भावी भवन्भूत इति त्रिधा स्यात्तत्र कार्यजः ॥२०८॥

कार्यस्य बुद्धिपूर्वकत्वात्त्रैविध्यम् ।

टीका—अस्यानुभावानाह—तत्रेति । प्रवासे इत्यर्थः । अङ्गमालिन्यादिकं नायिकायाः । मतान्तरमाह—किं चेति । दशेत्यत्र एकादशेति विज्ञेयम् । एवं च 'ज्ञेया' इत्यत्र 'एका' इति पाठः कल्पनीयः । इह प्रवासे मलापत्तिर्मलसंबन्धः । शून्यता विषयाग्राहित्वम् । तत्प्रकाशः तस्य तस्य नायकस्यालोकदर्शनम् । बाह्याभ्यन्तरत इति । बहिरिन्द्रियग्राह्ये मनोग्राह्ये चेत्यर्थः ॥ चिन्ताभिरिति । विरहिणीसख्याः कंचित्प्रत्युक्तिरियम् । स्तिमितं जडीकृतम् । विषयान्तरसंचयाक्षममिति यावत् । एतेनालम्बनता सूचिता । श्वासैकखिन्नः । न तु कान्तदशनक्षतेन । प्रार्थितः सन् दुर्लभः । यो दीनां दैन्यव्यञ्जिकां दशां सहत इत्यर्थः । बुद्धिपूर्वकत्वात्स्वेच्छया विधीयमानत्वात् ।

तत्र भावी यथा मम—

'यामः सुन्दरि, याहि पान्थ, दयिते शोकं वृथा मा कृथाः,
शोकस्ते गमने कुतो मम, ततो बाष्पं कथं मुञ्चसि ।
शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा,
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः ॥'

भवन्यथा—

'प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रिय सुहृत्सार्थः किमु त्यज्यते ॥'

टीका—एवं च भिन्नदेशगमनस्य संभावनायां भाविलम्। निश्चये वर्तमानत्वम्। निष्पत्तौ भूतत्वम्। अन्ययोस्तु संभावनानिश्चयासंभवादेकविधत्वमेव। यास इति—वर्तमानसामीप्ये लट्। गमनसंभावनामात्रेण यत् 'पान्थ' इति संबोधनं तत्त्वय्यस्मिन्कान्तस्य प्रेमाभावसूचनाय। तदवगत्य झटित्येव 'दयिते' इत्यनेन संबोधनम्। ततः शोकाभावादिति हेतोर्वाष्पं सुखासीत्यर्थः। जीवस्य प्राणानाम्। संभ्रमस्त्वरा। अत्र कान्तासंमतिलापिचतया गमनस्य संभावनामात्रम्॥ प्रस्थानमिति। कान्तप्रवासं निश्चित्य स्वजीवितं प्रति नायिकाया उक्तिरियम्। भो जीवितप्रियतम, प्रवासे सति त्वया अवश्यं गन्तव्यम्। तथा च प्रियतमे यातुं निश्चितचेतसि सति त्वया च वलयादिप्रियसुहृत्सार्थः किं कथं त्यज्यते। तेनैव साकं गम्यतामित्यर्थः। प्रियसुहृद्भिः सह गमने कष्टातिशयो न भविष्यतीति। जीवितसत्त्व एव वलयादिधारणं क्रियत इति वलयादीनां जीवितप्रियसुहृत्त्वम्। प्रस्थानमाह—प्रस्थानमिति। यातं त्यक्तः। बहुदिनव्यापकतद्वार्तया कार्श्येन वलयसंशः। अस्रैरश्रुभिरजस्रं निरवच्छिन्नं गतं गन्तुमारब्धम्। एषु पुनः प्रियसखत्वोपपादनमत्यन्तप्रियत्वसूचनाय। तच्चेष्टशद्धिः अश्रुपातेनैव जीवितबन्धो भवतीति स्वरक्षाकारित्वात्। अन्ये तु—'अश्रुजीवितयोरेकहृदयगामित्वादत्यन्तप्रियत्वम्' इत्याहुः। तेषामयमाशयः—नाडीविशेषेण हृत्कोषादश्रुनिर्गमो भवतीति, न चैवं धृतेरपि प्रियसखत्वापत्तिरिति वाच्यम्, धृतेरात्मधर्मत्वेन मनोधर्मत्वेन वा हृदयवृत्तित्वायोगात्। नाश्चित गतं, पुरो गन्तुमित्यनेन चित्तस्य पुरःसरत्वमेवोपपादितम्। ननु विभिन्नकालीनं गमनम्। तेन समं प्रस्थिता इति नानुपपन्नम्। यद्वा प्रियजीवन एव वलया धार्यन्त इति वलयानां धृतेः प्रीतिजनकत्वाच्चित्तस्य तत्प्रवणत्वात्प्रियस्य सुहृत्त्वम्। अस्राणां तु मानभङ्गव्यञ्जकतया अत्यन्तसखित्वमित्यत पृथक् प्रियसखित्वोपपादनम्। प्रियतमगमने गन्तुमारब्धा वलयादयः सख्योचितं कर्म कुर्वन्ति।

**भूतौ यथा—'चिन्ताभिः स्तिमितम्—' इत्यादि। शापाद्यथा—'तां जानीयाः—' इत्यादि। संभ्रमो दिव्यमानुषनिर्घातोत्पातादिजः। यथा—विक्रमोर्वश्यामुर्वशीपुरूरवसोः।**

अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानां चाङ्गसौष्ठवादीनामपि दशानामुभयेषामप्युभयत्र संभवेऽपि चिरंतनप्रसिद्ध्या उभयसंभवे विविच्य प्रतिपादनम् ।

अथ करुणविप्रलम्भः—

यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये ।

विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥२०८॥

यथा कादम्बर्यां पुण्डरीकमहाश्वेतावृत्तान्ते ।

पुनरलभ्ये शरीरान्तरेण वालभ्ये तु करुणाख्य एव रसः ।

टीका—तां जानीया इति । प्रोषितभर्तृकाया नायिकाया उदाहरणमिदम् । दिव्यो विद्युदुल्कादिः । मानुषो मर्त्यलोकभव भूकम्पादिः । निर्घात इति नाभसोपलक्षणम् । उत्पातोऽनिष्टसूचको दैवकृतः प्रकृतिविपर्यासः । आदिना उन्मादादिपरिग्रहः । उर्वशीपुरूरवसोरिति । उर्वशी हि पुरा मित्रावरुणशापान्मनुष्यलोकं प्राप्य पुरूरवसो गृहे 'यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नं पश्यामि तदा त्वामहं त्यक्ष्यामि, मम मेषद्वयं भवता रक्षणीयम्' इति नियमं कृत्वा स्थिता । तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतम् । तच्छ्रुत्वा पुरूरवाः ससंभ्रममेव वस्त्रमपरिधायैव खड्गपाणिर्मेषापहर्तुः पश्चाद्धावितः । एतस्मिन्नन्तरे विद्युद्भिस्तं नग्नमवलोक्योर्वशी स्वर्गं गतेति ग्रन्थस्य निष्कर्षार्थः । अत्र दैवकृतमेषापहरणरूपादुत्पातेन पुरूरवसः संभ्रमः, तेनोर्वश्या भिन्नदेशवृत्तित्वम् ॥ उभयत्र पूर्वरागे प्रवासे च । करुणविप्रलम्भमाह—यूनोरिति । विमनायते शोकव्याकुलचित्ततया विलापं कुरुते । पुनरलभ्य इति—रतिनाशाद् उत्कटशोकसंभवाच्च करुणाख्यो रसः, न पुनर्विप्रलम्भ इति भावः ।

किंचात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः, संगमप्रत्याशया रतेरुद्भवात् । प्रथमं तु 'करुण एव' इत्यभियुक्ता मन्यन्ते । यच्चात्र 'संगमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो

भेद एव' इति केचिदाहुः, एतदन्ये 'मरणरूपविशेषसंभवात्तद्भिन्नमेव' इति मन्यन्ते।

अथ संभोगः—

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ।
यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः ॥२१०॥

आदिशब्दादन्योन्याधरपानचुम्बनादयः। यथा—'शून्यं वासगृहम्—' इत्यादि।

संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।
अयमेक एव धीरैः कथितः संभोगशृङ्गारः ॥२११॥
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ॥२१२॥
अनुलेपनभूषाद्या वाच्यं शुचिमेध्यमन्यच्च।

तथा च भरतः—'यत्किंचिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते (उपयुज्यते च)' इति।

टीका—अत्र मतान्तरमाह किञ्च इत्यादिना॥ एकतरस्यानुरागाभावे शृङ्गाराभास इति तद्वारणाय—अन्योन्यमिति। शून्यमिति—व्याख्यातमेतत्प्राक्। संभोगोद्दीपनविभावानाह—तत्रेति। संभोगे इत्यर्थः। स्याद् उपयुक्तं भवति। वाच्यं संभोगोद्दीपकतया वर्णनीयम्। शुचिमेध्यमत्यन्तं निर्मलम्।

किं च।

कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः ॥२१३॥

यदुक्तम्—

'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते।

कषायिते हि वस्त्रादौ भूयान्रागो विवर्धते ॥' इति।

तत्र पूर्वरागानन्तरं संभोगो यथा कुमारसंभवे पार्वतीपरमेश्वरयोः। प्रवासानन्तरं संभोगो यथा मम तातपादानाम्—

'क्षेमं ते ननु पक्ष्मलाक्षि—किसअं खेमं महङ्गं दिढं,
एतादृक्कृशता कुतः—तुह पुणो पुट्ठं सरीरं जदो।
केनाहं पृथुलः प्रिये—पणइणीदेहस्स संमीलणात्,
त्वत्तः सुभ्रु न कापि मे—जइ इदं खेमं कुदो पुच्छसि॥'

एवमन्यत्राप्यूह्यम्।

टीका—संभोगभेदानाह—किं चेति। "अयमेक एव" इति एतदभेदवादिमतापेक्षया। पक्षान्तरसूचनम्। आदिना मानप्रवासकरुणविप्रलम्भानां ग्रहणम्॥ अद्भुत प्राप्नोति। एतेन पूर्वरागादिकं विनापि संभोगः संभवतीति सूचितम्। तथा च प्रकृष्टाप्रकृष्टभेदेन संभोगो द्विविधः। विप्रलम्भानन्तरः संभोगः प्रकृष्टः। स च विप्रलम्भस्तु भेदेन चतुर्विधः। तद्विपरीतोऽपकृष्ट इति फलितम्॥ क्षेमं ते इति। संस्कृतेन नायकस्य प्रश्नः, प्राकृतेन नायिकाया उत्तरम्। किसअं-कृशकम्। क्षेमं ममाङ्गं दृढम्। अतिशयितं कृशं यन्ममाङ्गं तदेव क्षेममित्यर्थः। तव पुनः पुष्टं शरीरं यतः। प्रणयिनीदेहस्य संमीलनात्। यदीदं क्षेमं कुतः पृच्छसि॥ अपरो यथा मम—'पादप्रणतमालोक्य कान्तमेकान्तकातरम्। मुञ्चन्ती बाष्पसंतानं सुमुखी तेन चुम्बिता॥', 'कान्ते घोरकृतान्तवक्त्रकुहरात्त्वं पुण्यपुञ्जेन मे मुक्ता कान्ततदर्जनत्रसमरं प्रत्यङ्गमालिङ्ग्य माम्। इत्याकर्ण्य निमीलिताधनयनं स्मेरं शनैरानतं सोल्लासं वदनाम्बुजं सुदृशः स्मेरं चुचुम्बे प्रियः॥'

अथ हास्यः—

विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत्।
हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥२१४॥

विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः ।
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥२१५॥
अनुभावोऽक्षिसंकोचवदनस्मेरतादयः ।
निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः ॥२१६॥
ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च ।
नीचानामपहसितं तथातिहसितं तदेष षड्भेदः ॥२१७॥
ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् ।
किंचिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥२१८॥

टीका—हास्यरसमाह—विकृतेति । विकृता आकारादयो यस्य तस्मात्कुहकात् नर्तकात् । एतदुपलक्षणम् । विकृताकारादिविषयकश्रव्यकाव्यादपि । 'कुतुकात्' इति पाठे विकृताकारादिजन्यात्कौतुकादित्यर्थः । अत्र हास्यरसे । तच्चेष्टा विकृताकारादि-पुरुषचेष्टा । हास्यरसस्थायिभावस्य हासस्य भेदानाह—ज्येष्ठानामित्यर्थः । हास्यभेदा-दित्यर्थः । एष हास्यरसः । स्मितादीनां लक्षणमाह—ईषदिति । तत्र हासेषु मध्ये ।

मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं विक्षिप्ताङ्गं [च] भवत्यतिहसितम् ॥२१९॥

यथा—

गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्राय च तर्कवादान्समागता कुक्कुटमिश्रपादाः ॥

अस्य लटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः ।

अत्र च—

यस्य हासः स चेत्क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥२२०॥

अभेदेन विभावादिसाधारण्यात्प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥२२१॥

एवमन्येष्वपि रसेषु बोद्धव्यम् ।

अथ करुणः—

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥२२२॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ॥२२३॥

टीका—ननु रसे नायकस्याभेदः सामाजिके भासते स चात्र शोकेन निबद्धः कथं तस्याभेदारोपो जायतामित्यत आह—अत्र चेति । चकारादन्यत्र । एष नायकः । विभावादेः सामर्थ्यात् । अन्यथानुपपत्तिज्ञानात् । ततः किमित्यत आह—अभेदेनेति । स्वपरसाधारणत्वेनेत्यर्थः । साधारण्यात् साधारणीकरणव्यापारात् । ततः साधारण्यज्ञानात् ॥ करुणरसमाह—इष्टेति । इष्टनाशश्च पुत्रादेर्विच्छेदो मरणं च वित्तादेर्नाशश्च ।

अनुभावा दैवनिन्दाभूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलयनानि च ॥२२४॥
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।
विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ॥२२५॥

शोच्यं विनष्टबन्धुप्रभृति ।

यथा मम राघवविलासे—

'विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरोषकर्तनम् ॥'

अत्र हि रामवनवासजनितशोकार्तस्य दशरथस्य दैवनिन्दा ।

एवं बन्धुवियोगविभवनाशादावप्युदाहार्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः ।

अस्य करुणविप्रलम्भाद्भेदमाह—

शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।
विप्रलम्भे रतिः स्थायी पुनः संभोगहेतुकः ॥२२६॥

टीका—खड्गेन शिरीषकर्तनमिवेत्यर्थः । अत्र प्रकारद्वाङ्गरयो नायको लभ्यत इति विवृणोति—अत्रेति—अनुचिताचरणमिव दैवस्य निन्दा सैवानुभावः । बन्धुवियोगो बन्धुमरणम् । तत्र यथा—'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥' अत्रेन्दुमतीमरणजनितशोकार्तस्याजस्य मृत्युनिन्दा ( रघौ ) । वित्तनाशो यथा—'प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी । यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ॥' अत्र नष्टराज्यस्य रामस्य परिदेवनम् । स्थायिभाव इति शेषः । पुनः सम्भोगो हेतुर्ज्ञापको यस्य सः ।

अथ रौद्रः—

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥२२७॥
मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव ।
संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढा ॥२२८॥
भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥२२९॥
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।
अनुभावास्तथाक्षेपक्रूरसंदर्शनादयः ॥२३०॥

मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः।

यथा—

'कृतमनुकृतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥'

टीका—रौद्रमाह। अस्य रौद्रस्य। 'अवदानं कर्मवृत्तम्' इत्यमरः। कृतमिति। द्रोण-शिरश्छेदेन क्रुद्धस्याश्वत्थाम्नोऽर्जुनं प्रति संबोध्योक्तिरियम् वेण्याम्। इदं मत्पितृ-शिरश्छेदरूपं गुरुपातकं तत्कारणं कर्म यैरुद्यतायुधैर्मर्यादाशून्यैरत एव मनुजपशुभिर्भवद्भिः कृतमनुमतं दृष्टं वा, नरकरिपुणा कृष्णेन सार्धं भीमकिरीटिसहितानां तेषां मेदोमांसैरय-महं दिशां दिगवस्थितभूतानां बलिं करोमीत्यर्थः। अत्राश्वत्थाम्नः क्रोधस्यार्जुना-दिरालम्बनम्। तदाकार्यमुद्दीपनम्। तादृशगर्जनमनुभावः। ननु रौद्रयुद्धवीरयो रिपुरालम्बनं विभाव इत्यतयोरभेद एवापतित इति तयोर्भेदं दर्शयितुमाह—अस्येति। रौद्रस्येत्यर्थः।

अस्य युद्धवीराद्भेदमाह—

रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥२३१॥

अथ वीरः—

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ॥२३२॥
आलम्बनविभावास्तु विजेतव्यादयो मताः।
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥२३३॥

संचारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ।
स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात् ॥२३१॥

स च वीरो दानवीरो धर्मवीरो युद्धवीरो दयावीरश्चेति चतुर्विधः । तत्र दानवीरो यथा परशुरामः—

टीका—रिपोरालम्बनत्वेऽपि क्रोधाविर्भावे रौद्रः, उत्साहाविर्भावे वीर इत्यनयोर्भेद इति भावः । वीररसमाह—उत्तमप्रकृतिरिति । उत्तमा धीरोदात्तरूपा प्रकृतिर्नायको यत्रेत्यर्थः । यद्वा उत्तमा चमत्कारातिशयाधायकतया रसान्तरादुत्कृष्टा प्रकृतिः स्वभावो यस्येत्यर्थः । विजेतव्यादिचेष्टादीत्यादिना दाने सत्त्वाध्यवसायादिर्धर्मे धर्मशास्त्राध्ययनादिर्दयायां दीनस्य कातरोक्त्यादिर्ग्रहणम् । सहायः सहकारी । स च युद्धे सैन्यं दाने वित्तं धर्मे द्रव्यसत्त्वादि दयायां त्यागादि । रोमाञ्चस्य संचारिभावत्वाभावात्तज्जनकहर्षं लक्षणा । स चेति । वीरश्चेत्यर्थः । दानादावुत्साहसंभवादिति भावः । * त्याग इति—सप्तभिः समुद्रैर्मुद्रिता वेष्टिता या मही तस्या निर्व्याजं निरुपाधि यद्दानं तदेवावधिर्यस्य सः । सत्त्वस्य गुणविशेषस्य अध्यवसाय उद्रेकः । आदिना प्ररोचनादेर्ग्रहणम् ।

'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः' इति ।*

अत्र परशुरामस्य त्यागे उत्साहः स्थायिभावः संप्रदानभूतब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः सर्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः संचारिभिः पुष्टिं नीतो दानवीरतां भजते ।

धर्मवीरो यथा युधिष्ठिरः—

'राज्यं च वसु देहश्च भार्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्माय सदोद्यतम् ॥'

युद्धवीरो यथा श्रीरामचन्द्रः—

'भो लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते

कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किंचिद्गतम्।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः॥'

दयावीरो यथा जीमूतवाहनः—

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात्त्वं विरतो गरुत्मन्॥'

अथ भयानकः—

भयानको भयस्थायिभावः कालाधिदैवतः।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः॥२३५॥

[अत्र युधिष्ठिरस्य वैदिककर्मण्युत्साह एतादृशोक्त्यानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते। भो इति—रावणं प्रति श्रीरामस्योक्तिरियम्। गतं नष्टम्। एवं जनकजादानम् न चेत्। पत्री शरः आत्मनोऽसहनं पत्त्रिण्यारोपितम्, रिपुहनने तस्य प्रधानोपायत्वसूचनाय। ज्याबन्धबन्धूकृतः गुणयोजितः। अत्र श्रीरामस्य युद्धोत्साह एतादृशोक्त्यानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते॥ शिरामुखैरिति। नाडीछिद्रैरित्यर्थः। मम जीमूतवाहनस्य। गरुत्मन्निति श्येनरूपधारिणः शक्रस्य संबोधनम्। अत्र जीमूतवाहनस्य कपोतरूपधारिधर्मात्मकपरदुःखप्रहरणोत्साहः स्वदेहमांसत्यागानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते॥ भयानकरसमाह—भयानक इति। स्त्रीनीच प्रकृतिरिति। स्त्रीनीचनायक इत्यर्थः। 'बालस्त्रीनीचनायकः' इति रुद्रपाठः]

यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः॥२३६॥
अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम्।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः॥२३७॥

जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः।

शङ्कापस्मारसंभ्रान्तिमृत्युवाद्या व्यभिचारिणः ॥२३४॥

यथा—'नष्टं वर्षवरैः—' इत्यादि।

अथ बीभत्सः—

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः।

नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥२३९॥

दुर्गन्धमांसरुधिरमेदांस्यालम्बनं मतम्।

तत्रैव क्रिमिपाताद्यमुद्दीपनमुदाहृतम् ॥२४०॥

निष्ठीवनास्यवलननेत्रसंकोचनादयः।

अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥२४१॥

मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः।

यथा—

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।

आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥'*

[तस्यालम्बनस्य। संभ्रान्तिरुन्मादः। नष्टमिति। अत्र वर्षवरादीनां नीचानां वानरवेषेणान्तःपुरप्रविष्टं विदूषकमालोक्य जायमानं भयं नाशाद्यनुभावेनास्वाद्यमानं सामाजिकानां रसतामापद्यते। स्त्रीनायको यथा—'इदं मघोनः कुलिशं धारासं-निहितानलम्। स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते॥' बालनायको यथा—'घोरमम्भोधरध्वानं निशम्य व्रजबालकाः। मातङ्के निलीयन्ते सकम्पविकृतस्वराः॥'

बीभत्सरसमाह—जुगुप्सेति। निष्ठीवनं थूत्कप्रक्षेपः। आस्यवलनं मुखसंवरणम्। उत्कृत्योत्कृत्येति। श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा* ]

अथाद्भुतः—

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः ॥२४२॥
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ॥२४३॥
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः ॥२४४॥
वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः।

यथा—

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टंकारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक्पर्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति॥'

[ *माधवस्योक्तिरियम्। अय प्रेतरङ्कः प्रेतदरिद्रः अङ्कस्थात् क्रोडस्थात् करङ्कात् मृतशरीरात् अस्थिसंस्थं स्थपुटगतं ग्रन्थिसंस्थमपि क्रव्यं मांसम् अव्यग्रमव्याकुलं यथा स्यात्तथा अत्तीत्यन्वयः। क्रमेण भक्षणादव्यग्रताभक्षणक्रममाह—उत्कृत्येति। प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्य पुनः पुनश्छित्त्वा अत्तीत्यनेनान्वयः। अथानन्तरम् पृथूच्छोथेन महोत्फुल्लतया भूयांसि बहुलानि। अंसः स्कन्धः। स्फिक् नितम्बः। आदिना ऊरुपरिग्रहः। अंसाद्यवयवेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धीनि जग्ध्वा भुङ्क्तेत्यन्वयः। स्थपुटगतस्याकर्षणादार्तत्वं तदाकर्षणार्थं च दशनप्रकटनम्। कश्चिदाच्छिद्य नेष्यतीति भयात्पर्यस्तनेत्रत्वम्। 'करङ्कोऽस्थिशेषं शिरः स्थपुटो विकटगभीरभागः' इति च... अत्र माधवस्य जुगुप्सा शवप्रेताभ्यामालम्बनाभ्यां पूति-

गन्धाद्युद्दीपनेन तादृगुक्त्या आक्षेपलभ्येन निष्ठीवनादिना चानुभावेन तथैव मोहादि-व्यभिचारिणा च संवलितो बीभत्सो रसः ॥ अद्भुतरसमाह—अद्भुत इति। लोका-तिगं लोकातिवर्ति। दोर्दण्डे ति। दीर्घकालव्यापकेन हरधनुष्टंकारेण विस्मितस्य लक्ष्मणस्योक्तिरियम्। दोर्दण्डाभ्यामञ्चित आकुञ्चितो यश्चन्द्रशेखरस्य हरस्य धनुर्दण्ड*]

अथ शान्तः—

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ॥२४५॥
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः।
अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ॥२४६॥
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ॥२४७॥
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः।
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ॥२४८॥
निर्वेदहर्षस्मरणमतिभूतदयादयः।

यथा—

'रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥'

[*तस्यावभङ्गाय उद्यत उद्गतः। आर्यस्य श्रीरामस्य बालचरितानां प्रस्तावनायां गाने डिण्डिमो वाद्यभेदः। पर्यस्त उत्क्षिप्तः कपालसंपुटः पिधानपात्राकारब्रह्माण्डोपरिभागः तेन द्राग् झटिति मिलत्संगच्छमानं ब्रह्माण्ड एव भाण्डं क्षुद्रस्थाली तस्योदरे भ्राम्यन् अतएव पिण्डितो बहुलीकृतश्चण्डिमा महत्त्वं यस्य। अद्यापि इदानीमपि। शरावाच्छन्न-

सुखस्यालोमध्ये जायमानः शब्दो बहुलो भवतीत्यभिप्रायेणेदम्। अत्र लक्ष्मणस्य विस्मयो धनुष्टंकारालम्बनेन तस्यातिदीर्घत्वगुणोद्दीपनेन एतादृगुक्त्या अनुभावनेन व्यक्त आश्चर्यरसतामापद्यते॥ शान्तरसमाह—शान्त इति। अत्र निर्वेदः स्थायिभावः। एतत्पक्षे श्रवसाननीयस्वमेवालम्बनम्। निर्वेदस्य व्यभिचारित्वेन स्थायित्वायोगात्, शमस्य स्थायित्वेनानुभूयमानत्वाच्च ग्रन्थकृता तदुपेक्षितम्। रोमाञ्चाद्या इत्याद्यपदेन दयादीनामपि ग्रहणम्। रथ्यान्तरिति। कस्यचिज्ज्ञातनिर्वेदस्योक्तिरियम्। रथ्या गृहसमीपदेशः, तन्मध्ये चरतो भिक्षार्थं भ्रमतः। अध्वगैर्नागरैश्च बीभत्सवेषदर्शनेन त्रासः, अनुपादेयकन्थावधारणेन कौतुकम्, दीनत्वेन दया। निर्व्याजीकृतः कामादिनाशेन निष्प्रतिबन्धीकृतो यश्चित्सुधायाः ज्ञानामृतस्य रसस्य आस्वादस्तस्य मुदा तज्जन्यानन्देन निद्रायमाणस्य मुद्रितनेत्रस्य। करटः काकः। ]

(अस्य) पुष्टिस्तु महाभारतादौ द्रष्टव्या।

निरहंकाररूपत्वाद्दयावीरादिरेष नो ॥२४९॥

दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्याप्तेर्दर्शनादहंकारोपशमो न दृश्यते। शान्तस्तु सर्वाकारेणाहंकारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दादेः शान्तरसप्रधानत्वमपास्तम्। ननु—

'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः॥'

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात्तत्र संचार्यादीनामभावात्कथं रसत्वमित्युच्यते—

युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः।
रसतामेति तदस्मिन्संचार्यादेः स्थितिश्च न विरुद्धा ॥२५०॥

[ ननु शान्ते दयाद्यतिशयसंभवेन दयावीरादिरेवायमित्यत आह—निरहंकाररूपत्वादिति। आदिना धर्मवीरदेवताविषयरतिप्रभृतीनां ग्रहणम्। एष शान्तरसः। तथा चाहंकारसंवलितो दयादिरेव दयावीरादेर्घटकः। तदितरः शान्तरस इति विशेषः। ततश्च दृश्यविशेषावधारणाच्च। नागानन्दे दयावीरादिप्रधाने ग्रन्थविशेषे। न यत्रेति—द्वेषो रिपूणामपचिकीर्षा। रागः सुहृदामुपचिकीर्षा। इच्छा वैषयिकसुखतदुपायेच्छा। भावेषु पदार्थेषु लोष्ठकाञ्चनादिविभावादिषु सत्सु रागद्वेषराहित्येन समसविषमं प्रमाणं प्रतीतिर्येन। 'शमप्रधानः' इति पाठस्तु न मनोरमः, अर्थासंगतेः। तादृशदशायां व्यभिचारिभावादीनामसंभवात् शम एव स्थायितया प्रधानं यत्र सः। आत्मस्वरूपापत्तिलक्षणायां परमात्मस्वरूपत्वप्राप्तिरूपायाम्। युक्तवियुक्तेति। विषयेभ्यः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनो निधाय वर्तमानचिन्तासंतानवान् युक्तः। यस्य योगजधर्मसहकृतेन मनसा जिज्ञासितवस्तु साक्षात्कारो जायते। यत्र भूतेन्द्रियजयी अणिमाद्याः कामसिद्धीर्दूरश्रवणाद्याश्चेन्द्रियसिद्धीरासादितवान् समाध्यन्वितो वियुक्तः। यस्य च योगजधर्मसहकृतानि बाह्येन्द्रियाणि* ]

यच्चास्मिन्सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। उक्तं हि—

> 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
> तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥'
> 'सर्वाकारमहंकाररहितत्वं व्रजन्ति चेत्।
> अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा॥'

आदिशब्दाद्धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः।

तत्र देवताविषया रतिर्यथा—

> 'कदा वाराणस्यामिह सुरधुनीरोधसि वस-
> न्वसानः कौपिनं शिरसि निदधानोऽञ्जलिपुटम्।

अये गौरीनाथ त्रिपुरहर शंभो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥'

अथ मुनीन्द्रसंमतो वत्सल:—

स्फुटं चमत्कारितया वत्सलं च रसं विदु: ।
स्थायी वत्सलतास्नेह: पुत्राद्यालम्बनं मतम् ॥२५१॥

[ *स्वे स्वे विषये महत्त्वसंनिकर्षादिसहकारिनिरपेक्षाणि वर्तन्ते स एव युक्तवियुक्त: । तद्दशायामित्यर्थ: । अस्मिन्शान्तरसे । नन्वत्र शमरूपसुखसत्त्वेन न सुखमित्यसंगतमत आह—यत्रेति । तृष्णाक्षयसुखस्य शमसुखस्य । एते कामसुखदिव्यसुखे । सर्वाकारं सर्वप्रकारम् । एतेनाहंकारसामान्याभाव: प्रतीयते । सर्वेति । सर्वं देहेन्द्रियादि आकार आश्रयो यस्य तत्तथा । अहंकारोऽभिमान:, तद्रहितत्वं तद्भावं व्रजन्ति । दयावीरादिनायका इति शेष: । यदि दयावीरादिनायका देहेन्द्रियादिविषयकाभिमान-शून्या भवन्ति, तदा दयावीरादयो रसा: शान्तरसस्वरूपा भवन्तीति तदर्थ: । अभिमानश्च देहेन्द्रिययोरहमित्यारोप: । देहादिसंबन्धिनि पुत्रादौ ममेत्यारोपश्च । अत्र शान्तरसे । तत्रेति । शान्तरसान्तर्भूतेषु दयावीरादिषु मध्ये । शान्तरसस्यान्तर्भूतदेवताविषय-रतिरित्यर्थ: । कदेति । कस्यचिच्छैवस्योक्तिरियम् । अत्र कौपीनपरिधानेच्छया अहंकारनिवृत्ति: प्रतीयते । केषांचिन्मतं वत्सलरसमाह—स्फुटमिति । उत्कटमित्यर्थ:

उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादय: ।
आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ॥२५२॥
पुलकानन्दवाष्पाद्या अनुभावा: प्रकीर्तिता: ।
संचारिणोऽनिष्टशङ्काहर्षगर्वादयो मता: ॥२५३॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातर: ।

यथा—

'यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः॥

एतेषां च रसानां परस्परविरोधमाह—

आद्यः करुणबीभत्सरौद्रवीरभयानकैः ॥ २५४॥

टीका—केचित् इति शैवः। अन्ये पुनरस्य भावकाव्यत्वमेवेच्छन्ति। तन्न। चमत्कारातिशययोगेन रसत्वस्यैव युक्तत्वात्। वत्सलता प्रेम, तत्सहितः स्नेहो रतिः। सा च लालनपालनादीच्छा। पुत्रादीत्यादिना भ्रात्रादिग्रहणम्। भ्रातालम्बनो यथा— 'देशे देशे कलत्राणि देशे देशे च बान्धवाः। तं तु देशं न पश्यामि यत्र भ्राता सहोदरः॥' इति। अत्र श्रीरामस्य भ्रातृस्नेहस्तादृशोक्त्यनुभावेनास्वाद्यमानो रसतामेति। केचित्तु 'सहोदरः इति सहः संग्रामसहः, अदरो निर्भयश्च' इति व्याकुर्वन्ति, तन्मते तदुभयमुद्दीपनविभावः। यदाहेति—पितुर्दिलीपस्य। स रघुः। अत्र दिलीपस्नेहस्य रघुरालम्बनम्। पादवयोक्ता तच्चेष्टा उद्दीपनम्। अन्येषामाचपालाभः। अत्र रसानां तत्तद्वर्णकथनं तत्तद्दैवताभिप्रायेण। आद्य इति—शृङ्गार इत्यर्थः।

भयानकेन करुणेनापि हास्यो विरोधभाक्।
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ॥२५५॥
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि।
भयानकेन शान्तेन तथा वीररसः स्मृतः ॥२५६॥
शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः।
शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ॥२५७॥
शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता।

आद्यः शृङ्गारः। एषां च समावेशप्रकारा वक्ष्यन्ते।

कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि ॥२५८॥

उन्मादादिर्न तु स्थायी न पात्रे स्थैर्यमेति यत् ।

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥२५९॥

संधिः शबलता चेति सर्वेऽपि रसनाद्रसाः ।

रसनधर्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः ।

भावादय उच्यन्ते—

संचारिणः प्रधानानि (प्रधानं हि) देवादिविषया रतिः ॥२६०॥

उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।

टीका—। शोकजुगुप्साभयसत्त्वेन रतेरसंभवादिति भावः। एवमग्रेऽपि। तादृश इति विरोधभाक्। स्थानत्रये 'विरोधभाक्' इत्यनेनान्वयः। ननु शृङ्गारादावुन्मादादेरपि संभवात्कथं रत्यादिस्थायिभावत्वं नियतमित्यत आह—कुतोऽपीति। क्वापि तद्रसविशेषे। पात्रे तद्रसत्वावच्छिन्ने। इदानीं रसपदस्य मुख्यलाक्षणिकार्थभेदज्ञापनार्थमाह—रसभावाविति। रसनादानन्दसंवलितज्ञानसंबन्धाद् रसा रसपदप्रतिपाद्याः। उपचारादिति—रत्यादिस्थायिभावानामभावेन मुख्यलक्षणायोगादिति भावः। न चात्र देवादिविषयरतिसत्त्वात्कथं स्थायिभावाभाव इति वाच्यम्। कान्तादिविषयरतेरेव स्थायित्वोपपादनात्। संचारिण इति—यथा विभावादिरभिव्यक्तो रत्यादिश्चिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते, तथा स्वकार्यकारणाभ्यामभिव्यक्तो देवादिविषयरत्यादिश्चिदानन्दरूपतां प्राप्तो भावत्वं प्राप्नोति चमत्कारसत्त्वासत्त्वाभ्यामनयोर्भेद इति भावः। अधुना संचारिभावानां प्रधानत्वमुपपादयति—

'न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
परस्परकृता सिद्धिरनयो रसभावयोः ॥'

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र

प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः। तत्र व्यभिचारी यथा —'एवंवादिनि देवर्षौ—' इत्यादि। अत्रावहित्था।

टीका—एवंवादिनीति। देवर्षौ नारदे। अत्र शिवप्रसङ्गजातहर्षसूचकस्य मुखरागादेर्लज्जया गोपनमवहित्था। सा चाधोमुखत्वव्यञ्जितलज्जया कारणेन लीलाकमलपत्रगणनरूपव्यापारान्तरासङ्गेन च झटिति प्रतीयत इति तस्याः प्रधानत्वम्। विभावादीनामत्यन्ततिरस्कृतत्वेन शृङ्गारस्याप्रधानत्वम्।

देवविषया रतिर्यथा मुकुन्दमालायाम्—

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि॥'

मुनिविषया रतिर्यथा—

'विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथवा श्रेयसि केन तृप्यते॥'
(Sisu),

राजविषया रतिर्यथा मम—

'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥

एवमन्यत्।

उद्बुद्धमात्रस्थायिभावो यथा—

'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥'

(Km)

अत्र पार्वतीविषया भगवतो रतिः।

ननूक्तं प्रपाणकरसवद्विभावादीनामेकोऽवभासो रस इति तत्र संचारिणः पार्थक्याभावात्कथं प्राधान्येनाभिव्यक्तिरित्युच्यते—

यथा मरिचखण्डादेरेकीभावे प्रपाणके ॥२६१॥
उद्रेकः कस्यचित्क्वापि तथा संचारिणो रसे।

टीका—मरणेऽपीत्यपिना इदानीम्। अत्र वक्तुः श्रीकृष्णभक्तोच्छा रतिः। विलोकनेनेति। नारदं प्रति श्रीकृष्णस्योक्तिरियम्। निबर्हितांहसा विनाशितपापेन। त्वद्राजीति। राजानं प्रति कस्यचिदुक्तिरियम्। गुरुविषया रतिर्यथा—'असमाप्तीतमहत्तरः क्रतुभुजामद्यायमाद्यो रविर्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती। अद्य त्वं बहु मन्यते सहचरैरस्माभिराखण्डलो येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः॥' अत्र दशरथस्य वसिष्ठे गुरौ रतिः। पित्रोरपि गुरुत्वात्तद्विषया रतिर्यथा—'जीवत्सु तातपादेषु न मे दारपरिग्रहः। मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥' अत्र श्रीरामस्य पित्रो रतिः। नृपादीत्यादिपदेन मित्रादेर्ग्रहणम्। तत्र यथा—'अद्य राज्यं मया प्राप्तमद्य वाली हतो मया। हरीणामद्य पूज्योऽस्मि यद्भवान्मित्रतां गतः॥' अत्र सुग्रीवस्य श्रीरामे मित्रे रतिः। 'आदिपदात्पुत्रादेरपि ग्रहणम्' इत्यन्ये। तन्न। तद्विषयकरतेर्वत्सलरसत्वेनैव ग्रन्थकृता दर्शितत्वात्। हरस्त्विति। परिवृत्तेति लुप्तेत्यर्थः। अत्रेति। उमामुखावलोकनरूपानुभावमात्रेण व्यक्ता रतिरत्र भावपदवाच्यः।

अथ रसाभासभावाभासौ—

अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ॥२६२॥

अनौचित्यं चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहि-

तत्त्वे त्वेकदेशयोगित्वोपलक्षणपरं बोध्यम्। तच्च बालव्युत्पत्तये एकदेशतो दृश्यते—

उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च।
बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ॥२६३॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते।
शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥२६४॥

टीका—अनौचित्येति। रसभावयोरनौचित्येन प्रवृत्तत्वे वर्तमानत्वे सति रसाभासो भावभासश्चेत्यर्थः। अत्र रसानामौचित्यमाह—अनौचित्यमिति। अनौचित्यपदमित्यर्थः। सामग्रीरहितत्वं विभावादिरूपयावत्कारणासत्त्वं। एकदेशयोगित्वं यत्किंचिल्लक्षण-संबन्धः, तदुपलक्षणपरं तद्बोधतात्पर्यकम्। तच्च अनौचित्यं च। उपनायकेति। शृङ्गारे 'शृङ्गारे दक्षिणाद्याश्च नायकाः—' इत्युक्तम्। नायकलक्षणे 'कुलीनः' इत्यनेन सत्कुलजातत्वम्। 'शीलवान्' इत्यनेन सद्वृत्तत्वं च नायकस्य लभ्यते। 'नायक-सामान्यगुणैर्भवति यथासंभवैर्युक्ता' इत्यनेन नायिकायाश्च सद्वृत्तत्वं लभ्यते। नायकस्य निषिद्धयोषित्संगमे नायिकायाश्च निषिद्धपुरुषसंगमे सद्वृत्तत्वं न भवतीति तद्विषयक-शृङ्गारस्य यथोक्तनायकाभावादेकदेशयोगित्वम्। निषिद्धयोषित उक्ताः शृङ्गारतिलके—'संबन्धिमित्रद्विजराजहीनवर्णाधिकानां प्रमदा न गम्याः। व्यङ्गास्तथा प्रव्रजिता विभिन्नमन्त्राश्च धनार्थमनोभवश्चैः ॥' इति। एवं योषितामपि संबन्ध्यादयः पुरुषा निषिद्धाः। एवं च मुनिगुरुपत्नीगतायां चेति चकारेण संबन्ध्यादिपत्नी बोध्याः। उपनायकसंस्थायामित्यत्र संबन्ध्याद्यन्यतम उपनायको बोध्यः। अन्यथा 'बहुनायक-विषयायाम्' इति 'प्रतिनायकनिष्ठत्वे' इत्यनयोरुपादानं व्यर्थं स्यात्। बहुनायकेति। संबन्ध्यादिभिन्ना अपि बहुनायका निषिद्धा इति भावः। अनुभयनिष्ठायामिति। 'विभिन्नमन्त्राश्च' इत्यनेनान्यतरस्यां मतौ निषिद्धत्वादिति भावः। नायकस्य प्रतिपक्षः प्रतिनायकः। अस्य संबन्ध्यादिभिन्नत्वे नानिषिद्धेऽपि भर्तुरनभिमताचरणेनासद्वृत्तत्वं नायिकाया इति भावः। अधमपात्रेति। असत्कुलजातनायक इत्यर्थः। तिर्यगादीति।

तिर्यगादीनां नायकलक्षणाभावादिति भावः। रौद्र इत्यादौ 'अनौचित्यम्' इत्यन्वेति। 'क्रोधात्मको भवेद्रौद्रो प्रतिशूरैरमर्षितः। रूक्षप्रायो भवेदत्र नायकोऽत्युग्रविग्रहः॥'

शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये।

ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥२६५॥

उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र।

तत्र रतेरुपनायकनिष्ठत्वे यथा मम—

'स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी

क्षोणीमावृणुते तमालमलिनच्छाया तमःसंततिः।

तन्मे सुन्दर मुञ्च कृष्ण सहसा वर्त्मेति गोप्या गिरः

श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः॥'

बहुनायकनिष्ठत्वे यथा—

'कान्तास्त एव भुवनत्रितयेऽपि मन्ये

येषां कृते सुतनु पाण्डुरयं कपोलः।'

टीका—नायकवैपरीत्यादनौचित्यमिति भावः। ब्रह्मवधादीति। ब्रह्मवधादीनां वेदविरुद्धानामाचरणतया नायकत्वं न संभवतीत्यर्थः। अधमपात्रगत इति। 'उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः। त्रिविधो नायकस्तत्र जायते सत्त्वसंकुलः॥ गाम्भीर्यौदार्यं शौटीर्यधैर्यवीर्यादिभूषितः। आवर्जितजनो यस्य विरूढप्रौढविक्रमः॥' इत्युक्तगुणहीननायकगत इत्यर्थः। उत्तमेति। 'बालस्त्रीनीचनायकः' इत्यनेन बालादिनायकत्वमेव भयानकस्योचितम्। एवमन्यत्रेति। अदैवहतपात्रगते करुणे, तत्त्वज्ञानपात्रगते बीभत्से, विशेष दर्शितपात्रगते आश्चर्ये, अपकार्यालम्बने वत्सलेऽनौचित्यं बोध्यमित्यर्थः। स्वामीति—मुग्धतरोऽतिमूढः विलम्बे प्रहारादिकं करोति, अथ चात्यन्तसुरतानभिज्ञः। घनमित्यनेन भयदत्वम्, निबिडतया जनदर्शनाभावेन सुरतयोग्यस्थानत्वं च [illegible]। एकाकिनीत्यादिना गमने भयम्, स्वच्छन्दं रमस्वेति

च सूचितम्। सुन्दरीति पथि परित्यागाय स्तवः, अथ च स्वप्रियत्वं सूचितम्। अत्र श्रीकृष्णस्य संबन्धित्वेन गोप्यास्तदनुरागोऽनुचित इति भावः। 'स्वामी निःश्वसितेऽप्यसूयति—' इत्यादि परनायिकोदाहरणं तु न शृङ्गाराभासः।

अनुभयनिष्ठत्वे यथा—मालतीमाधवे नन्दनस्य मालत्याम्। 'पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्' इति श्रीमल्लोचनकाराः।

तत्रोदाहरणं यथा—रत्नावल्यां सागरिकाया अन्योन्यसंदर्शनात्प्राग्वत्सराजे रतिः।

प्रतिनायकनिष्ठत्वे यथा—हयग्रीववधे हयग्रीवस्य जलक्रीडावर्णने।

अधमपात्रगतत्वे यथा—

'जघनस्थलनद्धपत्त्रवल्ली गिरिमल्लीकुसुमानि कापि भिल्ली।
अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कचयांचकार भर्ता॥'

तिर्यग्गतत्वे यथा—

'मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती।
चञ्चद्विपञ्चीकलनादभङ्गीसंगीतमङ्गीकुरुते स्म भृङ्गी॥'

आदिशब्दात्तापसादयः।

रौद्राभासो यथा—

'रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः॥'

टीका—जवनेति। गिरिमल्लीकुसुमानि कुटजपुष्पाणि उत्कचयांचकार वन्ध्यामास। मल्लीति। मल्लीभिः प्रशस्तेषु वनान्तरेषु वनमध्येषु। वल्लयन्तरे स्वाधिष्ठितलताभिन्नलतायां वर्तमानम्। सुरतार्थमाह्वयन्ती। चञ्चत् प्रवाहवन्निरवच्छिन्नं विपञ्चीकलयानादभङ्ग्या वीणासूक्ष्ममधुरनादसादृश्येन विशिष्टं यत्संगीतं तदङ्गीकुर्वती सा स्मरोद्दीपनीपकरणं कुरुते स्म। आदिशब्दात्। 'तिर्यगादिगते' इत्यत्रादिपदात्। रक्तोत्फुल्लेति। कर्णं सूतपुत्रं प्रतिशूरम्। 'हरेः' इत्यनादरे षष्ठी। पश्यन्तं कृष्णमनादृत्येत्यर्थः। आभातो दग्धः। 'कटुकोक्तिभिः' इत्यत्र 'अनलैः' इति रूपकं व्यङ्ग्यम्। स्वं स्वकीयं स्कन्धस्य करेणाघातोंसास्फोटस्तत्र पटुः। तत्कारीत्यर्थः। अत्र ज्येष्ठभ्रातरि गुरौ क्रोधोऽनुचितः।

भयानकाभासो यथा—

'अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम्।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि

कौशिकः॥' (Si)

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः। एवमन्यत्र।
भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ॥२६६॥
स्पष्टम्।

भावस्य शान्तावुदये संधिमिश्रितयोः क्रमात्।
भावस्य शान्तिरुदयः संधिः शबलता मता ॥२६७॥

टीका—कौशिक इन्द्रः पेचकश्च। अत्रानौचित्यं दर्शयति—स्त्रीति। भावाभास इति प्रथमादिपदेन चिन्तादीनां द्वितीयादिपदेनाननुरागिण्यादीनां ग्रहणम्। यथा—'राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी। तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥' अत्र नायिकायाः स्वीकारोपायचिन्तयानुरागाभावो व्यज्यते इयं चिन्ता अनुचिता। एवं नृपादि-

विषयरतिः शात्रवादिविषयत्वेऽप्यनौचित्यम् । भावशान्त्यादिमाह—भावस्येति । एतस्य-वर्ग्रन्तपदेनान्वेति । भावस्य व्यभिचारिणः । शान्त्यादावास्वादे सति भावशान्त्यादिनाम-काव्यात्मा भवतीत्यर्थः । शान्तिर्विरुद्धसामग्रीबलात्प्रशमावस्था । उदयः स्वसामग्री-माहात्म्येनोद्गमावस्था । संधिरुभयसामग्रीयोगेन परस्परविमर्दः । स च परस्पर-विमर्दयोरेकनाशे चान्योत्पत्तिरित्येवंरूपः । केचित्तु—'विरुद्धयोरेकस्मिन्नेकदेशावच्छेदक-भेदेन स्थितिः संधिः' इत्याहुः । तन्न । वक्ष्यमाणोदाहरणासंगतिप्रसङ्गात्तवावच्छेद-कानुपपत्तेः । अनुपस्थितस्यापि लक्षणादेरवच्छेदकत्वं कल्प्यमिति चेत्, एकदेशत्वसंगतेः । मिश्रितं मिश्रणं तच्च पूर्वपूर्वस्य बाध्यत्वेन उत्तरोत्तरस्य बाधकत्वेनैकत्र काव्ये निबन्धनम् ।

क्रमेण यथा—

'सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किंचित् ॥'

अत्र बाष्पमोचनेनेर्ष्याख्यसंचारिभावस्य शमः ।

'चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥'

अत्र विषादस्योदयः ।

'नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
'रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥'

[ भावशान्तावेकस्यैव नाशः । उदये एकस्यैवोत्पत्तिः । संधौ द्वयोरेव युगपद्विना-शोत्पत्तौ । शबलतायां बहूनां विनाशोत्पत्ती । इति विशेषः । केचित्तु—'भावाना-

मुत्तरोत्तरबलवत्त्वं शबलता, बलवत्तत्समूहो वा' इत्याहुः। तन्न। वक्ष्यमाणोदाहरणे हि द्वयोर्द्वयोर्भावयोरुत्तरस्यैव बलवत्त्वम्। न तु यावतामुत्तरेषाम्। भावशान्तिमुदाहरति—सुतन्विति। अनल्पं बहुतरम्। 'प्रशम इति व्यज्यते' इति शेषः। अत्र पादपतनरूपप्रसादसामग्र्या ईर्ष्यायाः प्रशमः स्फुटते। भावोदयमाह-चरणपतनेति। चरणपतनस्य प्रत्याख्यानाच्चरणक्षेपादिना निराकरणात्। पराङ्मुखि प्रसादरूपफलविमुखि। परुषीकृते स्वच्छीने कृते। स्तनस्थितहस्तयेति। स्तनस्थहस्तनिवेशनेन हृदय मा स्फुटेति हृदयायास इति भावः। अत्र नायकप्रत्याख्यानरूपसामग्र्या विषादः स्फुटते। भावसंधिमाह—नयनेति। नयनयुगस्यासेचनकमतितृप्तिजनकम्। 'तदासेचनकं तृप्तेर्नास्त्यन्तं यस्य दर्शनात्' इत्यमरः। नदिरः खञ्जनः। मदयति आनन्दयति। दुनोति संतापयति। अत्रैकस्यैव कामिनीरूपस्यात्युत्कृष्टत्वेन आनन्दस्योपभोगाप्रयोजकत्वेन विषादस्य च जनकत्वम्।

अत आह—

अत्र हर्षविषादयोः संधिः॥

'क्वाकार्यं, शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो, कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि, कः खलु युवा धन्योऽधरं पास्यति॥'

अत्र वितर्कौत्सुक्यमतिविस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता॥

इति साहित्यदर्पणे रसादिनिरूपणो नाम तृतीयः परिच्छेदः।

टीका—भावशबलतामाह—"क्वाकार्यमिति। उर्वशीविरहात्स्वमरणमुपक्रम्य पश्चान्निवर्तमानस्य पुरूरवस उक्तिरियम् विक्रमोर्वशीये। अकार्यं स्त्रिया सह मरणम्। शशलक्ष्मणश्चन्द्रस्य। सा उर्वशी। मे मम श्रुतमधीतम्। मुखमिति तस्या इति शेषः। कुलमित्यनेन चन्द्रकुले स्त्रीविरहादात्महननमकार्यमित्येवंरूपविचाररूपो वितर्कः। सैव-

नौत्सुक्यम्। श्रुतमित्यन्तेन सर्वथा तदनुरागो दोषायैवेत्यर्थनिर्धारणरूपा मतिः। सुख-मित्यन्तेन सुखस्य कमनीयत्वस्मरणम्। क्वतधिय इत्यन्तेन शङ्का। दुर्लभमित्यन्तेन स्वानौजस्य-रूपं दैन्यम्। उपैहीत्यत्येन धृतिः। प्रास्यतीत्यन्तेन चिन्ता व्यङ्ग्या। अत्र द्वयोर्द्वयोर्भावस्य पूर्वस्य प्रशमाङ्गस्य बाध्यत्वम्। उत्तरस्य विप्रलम्भाङ्गस्य बाधकत्वम्। चिन्तायां विश्रान्तेस्तदङ्गकस्य विप्रलम्भशृङ्गारस्य शान्तापेक्षया परिपोषः। तस्याप्यन्तरान्तरा प्रशमोदयादैकान्तमभिलाषस्य नास्वाद्यत्वमिति खण्डरसत्वमित्यवधेयम्। उभयाङ्गस्य भावसमूहस्य बाध्यबाधकभावो मुख्यत्वेनास्वाद्यत इति भावशबलताया एव प्रधानत्वमिति॥"

---

## Summary of Chapter III here.

This chapter says of sentiment (Rasa) in details and its incidentals. We have stated in the Intro. P. XXII-III that "Bhava" solidified and made permanent is "Rasa"; hence every "Rasa" has a so-called permanent Bhava (cp. "विभावादिभिः अपरिपुष्ट उद्बुद्धभावः स्थायी च भावः" "भावयति जनयति रसान् इतिभावः" "रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः" "भावाः विविधाः स्थायिनो व्यभिचारिणः सात्त्विकाश्च" etc. and "विभावादिभिः परिपुष्टो रसीभूतः" "विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः आनीयमानः स्वाद्यतां नीतः स्थायिभावो रसः स्मृतः" etc.)

Rhetoricians declare—"Bhava" are देवादिविषया प्रीति, nine स्थायिभाव of nine Rasa (e.g. Srimgara, Hasha, Raudra, Karuna, Vira, Bhayanaka, Bibhatsa, Adbhuta and Shanta

with Rati, Hasha, Krodha, Bhaya, Jugupsa, Vismaya and sama as स्थायिभाव respectively), 33 व्यभिचारिभाव and 8 Sattwika bhava (e.g. Sweda, Sthambha, Romancha, Swarabhanga, Vepathu, Vaivarnya, Asru and Pralaya), and "Rasas" arenine only (See Intro ).

(1) A Rasa is generated by विभाव (its cause or support), by अनुभाव (its effects and manifestations), and by सञ्चारिभाव or व्यभिचारिभाव ( its attendant feelings ) ।

(2) विभाव is of 2 kinds—(i) आलम्बन विभाव (the hero or heroine) with ref. to whom our Rasa arises (ii) उद्दीपनविभाव (i.e. which excite or augment the feeling of a Rasa).

अनुभाव are outward manifestations, gestures etc that are effects of the feeling of a Rasa.

व्यभिचारिभाव are attendant feelings of a Rasa or of a स्थायिभाव ; they are 33 in number and are transient subordinate feelings which rise up and go down as their function is done.

सात्त्विकभाव though included within अनुभाव are taken mostly as separate (like गो and बलीवर्द taken separately though both are within the same bovine class) due to their having सत्त्वगुण at the root.

N. B.—Here remember that विभाव and अनुभाव are taken along with Rasa being its inseparable cause and effect respectively (See P. 116). Rasa is स्वाद्य, चर्व्यमाण, चमत्कार, स्वप्रकाश, ब्रह्मानन्दसहोदर etc.

(3) There are usually four types of Nayaka or hero धीरोदात्त, धीरोद्धत, धीरललित and धीरप्रशान्त। But in sringara broadly we have 16 varieties of Nayaka (See p. 121 to 23) etc. पीठमर्द is Nayaka's main assistant; then there are others विदूषक, विट, चेट, मन्त्री etc as सहाय of नायक। Then there are 3 types or heroine (Nayika)—स्वस्त्री, अन्यस्त्री and साधारणी स्त्री॥ Then there are 13 types of स्वीया, 2 परकीया one साधारणी॥ These 16 Nayikas are again divided into 128. due to their 8 "Avastha" of स्वाधीनभर्तृका, खण्डिता, अभिसारिका, कलहान्तरिता, विप्रलब्धा, प्रोषितभर्तृका, वासकसज्जा, विरहोत्कण्ठिता।

All these 128 Nayikas make 384 due to their उत्तम, मध्यम and अधम characteristics.

(4) Alamkaras of Nayika are—(i) 3 अङ्गज (ii) 18 स्वभावज (iii) 7 अयत्नज॥ of these नायक has 3 अङ्गज and 7 अयत्नज only.

(5) Then their अनुरागेङ्गित are described.

(6) Then विभाव, अनुभाव, सात्त्विक and व्यभिचारिभाव are enumerated with illustrations.

And next nine Rasa with their विभाव, अनुभाव, व्यभिचारीभाव and स्थायिभाव are stated in order. Bhava and Rasa are interrelated.

Lastly mutual contradictions of Rasa are stated; followed by description of भावाभास, रसाभास, भावशान्ति-सन्ध्यादि॥ (See end of ch. 1 also).

# चतुर्थः परिच्छेदः

# THE FOURTH CHAPTER

अथ काव्यभेदमाह—

Now, the author proceeds to classify (different kinds of) Kavya, that is, literary composition after saying काव्य स्वरूप and रसस्वरूप।

कारिका। काव्यं ध्वनि-गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम्।

Eng. Kavya is said to be (at first) of two types. (1) Dhwani (a literary piece of composition—wherein the inner meaning, that is, the purpose implied by the said piece of composition is more appealing than the ordinary outer meaning, that is, the meaning which is known by the force of the Abhidha Sakti), as well as (2) Gunibhuta-Vyangya, that is, the Kavya, wherein the meaning known through implication is also appealing with or less significant than the ordinary meaning. In other words, in Dhwani Kavya व्यङ्ग्यार्थ excels वाक्यार्थ, and in gunibhuta vyanga व्यन्यर्थ is subordinated to वाच्यार्थ।

तत्र—

कारिका। वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्।

विवृतिः। वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यते अस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम्।

